No. 52. ] [ Price Rupe

THE

# CHOWKHAMBA SÂNSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# न्यायसुधा ।

तन्त्रवार्तिक टीका भट्टसोमेश्वरविरचिता ।

## NYÂYASUDHÂ,

A COMMENTARY ON TANTRAVÂRTIKA,

BY

PANDIT SOMESHWARA BHATTA,

EDITED BY

PANDIT MUKUNDA SHÂSTRI,

*of the Government Sanskrit-College, Benares.*

FASCICULUS V;

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT:

BENARES.

AGENT:—OTTO HARRASSOWITZ, LEIPZIG:

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA VILASA PRESS.

BENARES.

1902.

र्थानुपयोगित्वात्प्रमेयान्तर्भूतव्यावर्त्तकत्वे लक्षणाविशेषणात्वानुपपत्ते-रुपलक्षणत्वमात्रकल्पनयातिक्रान्तयागस्य पुरुषस्य साधनत्वं सम्भाव्येत तस्य कर्त्रधिकरणे निषेत्स्यमानत्वाद्यागस्य पुरुषोपलक्षणत्वानुपपत्तेः शुद्धस्यैव पुरुषस्य साधनतापत्तेः फलनानात्ववैचित्र्ये न युज्येते एवेत्याह * कर्त्रिति * ननु विनष्टस्य यागस्य वैलक्षण्यानापादकत्वे तज्जन्यस्यापूर्वस्यापि वैलक्षण्यानुपकृतेर्नो वैलक्षण्यापत्ते-स्त्वत्पक्षे ऽप्येतौ दोषौ तुल्यावित्याशङ्क्याह * यस्य त्विति * कार्यकल्प्यत्वाद्यथाकार्यं विलक्षणमेव तत्कल्प्यत इत्याशयः। यथा च सत्तातिक्रान्तयागस्य कर्त्तुः फलसाधनस्य फलान्तरोत्पादनकाले ऽपि भावाद् बहुप्रयोगानुष्ठानानर्थक्यं तथातिक्रान्ताङ्गस्यापि कर्त्तुः कर्मोपकारित्वाभ्युपगमे सकृत्कृतेष्वङ्गेषु श्रुतिक्रान्ताङ्गस्य कर्त्तुः कर्मान्तरकाले ऽपि भावात्कर्मान्तराणामप्युपकारसिद्धेः पुनरनुष्ठानानर्थक्यमित्याह * किं चेति * कूसूलमध्यगतस्य धान्यस्य धान्यान्तराद्यवच्छेद्यत्वदर्शनादङ्गमध्यगतत्वेनाङ्गावच्छिन्नतोक्ता यथा प्रधानावच्छिन्नः कर्त्ता फलसाधनं तथोपकारको ऽप्यङ्गावच्छिन्नः कर्त्तैव चेदिष्यते ततः प्रकृतौ कृतैरङ्गैर्विकृतावपि प्रसङ्गेनोपकारसिद्धेर्विकृतावङ्गानां प्राप्तिर्न स्यादित्यर्थः। श्लोकं व्याचष्टे *प्रयाजादीनामिति* उपकार्यभेदे ऽपि तावदन्यार्थसिद्धोपकारसद्भावे ऽप्यन्यो नापेक्ष्यते इह तूपकार्यमप्यभिन्नमिति सो ऽपि चेत्यनेन सूचितम्। नन्वङ्गानामपूर्वार्थत्वस्य वक्ष्यमाणत्वान्न कर्त्तुरुपकार्यतेत्याशङ्क्य *अपूर्वाभावादित्युक्तम् * प्रयाजादिगतस्यातिक्रान्तप्रयाजादिकर्तृजन्यस्योपकारस्य सद्भावेनान्यार्थाङ्गकृतस्योपकारस्येतरत्रापि सन्निधानाविशेषरूपप्रसङ्गलक्षणसद्भावात्तस्य कृतप्रयाजादेः पुरुषस्य न पुनरङ्गान्यनुष्ठातव्यानीति कर्तृपक्षाद्यङ्गीकरणात्तेन नानुष्ठातव्यानीत्यर्थः। ननु तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वादिति द्वादशाध्यायाधिकरणसिद्धान्तसूत्रे तन्त्रमध्यविधाननिबन्धनत्वेन प्रसङ्गस्य वक्ष्यमाणत्वात्कथमिह तदभावे प्रसङ्गः स्यादित्याशङ्क्य * विनापीत्युक्तम् * अन्यार्थाङ्गकृतस्योपकारस्यान्यत्रापि सन्निधानाविशेषस्तन्त्रार्थस्याविशिष्टत्वादित्यनेनोक्तः। तन्त्रमध्यविधानस्य फलं तत्वेह न तन्त्रमध्यविधानं विनाप्युपकारस्यात्मनो विततत्वाल्लभ्यतइत्यर्थः। को ऽननुष्ठाने दोष इत्याशङ्क्याह *तत्रेति* ननु पश्वर्थमनुष्ठितैर्विद्युदादिभिर्ब्राह्मणतर्पणान्तैः सर्वैरङ्गैः सम्पाद्यस्योपकारस्याद्याङ्गानुष्ठानेनोपक्रान्तस्यान्त्याङ्गानुष्ठानात्प्रागसमाप्तेस्तन्मध्ये ऽनु-

१ अनुपलम्भे नेति २ पु० पा०।

ष्टीयमानेन पशुपुरोडाशेनैकदेशकालकर्तृकत्वात्प्रसङ्गेन तादर्थ्यमपि युक्तं, विकृतेस्तु प्रकृतिप्रयोगबहिर्भावात्प्रकृतौ कृतस्योपकारस्य विकृत्या सहैकदेशकालकर्तृत्वानुपपत्तेस्तादर्थ्यमयुक्तमित्याशङ्कते * नन्विति * प्रकृतौ कृतानां प्रयाजादीनां विकृत्या सह कालभेदादेतत्प्रयाजाद्युपकृतमात्मरूपं न विकृतौ प्रसङ्गेनोपकरोतीत्यर्थः । पश्वर्थस्यापि प्रयाजानुयाजादेः पुरोडाशप्रयोगे ऽनुपक्रान्ते समाप्ते वा ऽनुष्ठानाद्भिन्नकालस्यापि प्रासङ्गिकत्वोपकारकत्वं दृष्टमित्याशङ्क्य * अत्यन्तेत्युक्तम् * पश्वर्थप्रयाजादिप्रयोगस्य पुरोडाशप्रयोगाद् बहिर्भावे ऽपि पुरोडाशप्रयोगस्य तदन्तर्भावेन नात्यन्तं कालभेदो ऽस्तीत्याशयः । विकाराच्च न भेदः स्यादर्थस्याविकृतत्वादिति द्वादशाधिकरणसूत्रे पाशुकानां प्रयाजानुयाजानामेकादशसंख्यत्वेन पौरोडाशिकेभ्यः पञ्चत्रिसंख्येभ्यो ऽनुयाजानां च पृषदाज्यद्रव्यकत्वेन शुद्धाज्यद्रव्यकेभ्यः पौरोडाशिकेभ्यो गुणतो विकृतत्वात्तिष्ठत्पशुकालत्वेन च पाशुकानां प्रयाजानां पौरोडाशिकेभ्यः सन्नहविष्कालेभ्यः कालतो विकृतत्वादनुष्ठानभेदः स्यादित्याशङ्कानिरासार्थं गुणकालविकारे सत्यप्यर्थस्योपकारस्याविकृतत्वान्नानुष्ठानभेद इत्यभिधानेनास्यापि चोद्यस्योत्तरमुक्तं भवतीत्याह * वक्ष्यतीति * नन्वेतदेककालोपकारविषयत्वात्कथं कालभेदचोद्यस्योत्तरमित्याशङ्क्य आह * यदेव हीति * कर्तृव्यतिरिक्तापूर्वानभ्युपगमेनास्मिन्पक्षे कर्तुरेवोपकारकत्वात्तस्य च स्थायित्वेनाविकृतत्वात्कालभेदे ऽप्यन्यथात्वाभावात्प्रसङ्गसिद्धिरविरुद्धेत्याशयः । अतिक्रान्तयागकर्तृपक्षोक्तदोषाः कर्मविनाशस्यापि साधनत्वपक्षे ऽतिदेष्टव्या इत्याह * एतइति * कथमित्यपेक्षायामनुभाषणपूर्वकमतिदिशति * यस्यापि चेति * हिशब्दार्थे चशब्दः एतदेव दृष्टान्तेनोपपादयति * त-
३७०।१ था हीति * महारोगापेक्षया रोगान्तराणां शुभत्वं विवक्षित्वा शुभाशुभकर्मविनाशाविशेषदृष्टान्तत्वं वाशब्देन रोगानुत्पत्तेरप्युपलक्षणात्प्राक् प्रध्वंसाभावाविशेषदृष्टान्तत्वं विनाशानां तु वैचित्र्याभ्युपगमे वस्तुन्येव वैचित्र्यदर्शनात् वस्तुत्वापत्तेः । कर्मानन्तरभावितत्सम्बन्धिवस्त्वन्तराभावान्नामान्तरेणापूर्वमेव स्यादित्याह * यदि त्विति * श्रुतहानाश्रुतकल्पनाप्रसङ्गश्चास्मिन्पक्षे स्यादित्याह * न चेति * श्लोकं व्याचष्टे * यजेतेति * यद्वा यथाश्रुतस्वर्गत्यागेनाश्रुतस्वर्गाभावस्य फलत्वकल्पनं न युक्तं तथा श्रुतयागत्यागेनाश्रुतस्य यागाभावस्य साधनत्वकल्पनमपीति वक्रोक्त्या दर्शयन् पूर्वार्द्धं व्याचष्टे * अथ वेति * ननु यथापूर्वसाधनत्वकल्पने ऽपि न या-

गसाधनत्वाद्धानिस्तथा यागाभावस्यापि साधनत्वेन तद्धानिरित्याशङ्कानिरासार्थत्वेनोत्तरार्द्धं व्याख्यातुं पूर्वोक्तमेवापूर्वपक्षे श्रुतहानाश्रुतकल्पनाप्रसङ्गाभावमाशङ्कापूर्वकं स्मारयति * अपूर्वेति * भावनिरपेक्षस्याभावस्य साधनत्वादर्शनान्न विनाशस्य साधनत्वं सम्भवतीत्याह * न चेति * ननु विहिताकरणस्याभावरूपस्यापि प्रत्यवायसाधनत्वस्मृतेस्तत्कालान्यकरणापेक्षत्वे च तस्यौदासीन्यमात्रेणापि प्रत्यवायपरिहारासिद्धेरनुष्ठानानर्थक्यप्रसङ्गादवर्जनीयस्य निमिषितादेः प्रत्यवायसाधनत्वे विहितानुष्ठानेऽपि प्रत्यवायापत्तेः विहिताकरणापेक्षत्वे[1] च तस्यौदासीन्यमात्रस्य निमिषितादेः साधनत्वेऽन्वयव्यतिरेकाभ्यामकरणस्यैव साधनत्वापत्तेर्भावनिरपेक्षस्याभावस्य साधनत्वं दृष्टमित्याशङ्क्याह * यदि त्विति * गुर्वाज्ञाननुष्ठानेनाहमवज्ञातोऽस्मीत्यवज्ञानिमित्तगुरुकोपदर्शनाद्विहितावज्ञाख्यभावसहकृतस्यैव विहिताननुष्ठानस्य साधनत्वकल्पना युक्तेत्याशयः * अत एवाचार्यैः *

स्वकाले यदकुर्वन्स्तत्करोत्यन्यदचेतनः।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते॥

इति विहितमकुर्वन्यदन्यत्करोतीति वदद्भिर्विहिताकरणनिमित्तस्यान्यकरणस्य प्रत्यवायनिमित्तत्वाभिधानादवज्ञायामेव वाकरणस्य निमित्तत्वोपपत्तेर्विहितावज्ञानमेव प्रत्यवायहेतुत्वेनोक्तम्। नाभावेनैव जन्यत इत्येवशब्दोत्कर्षेण केवलस्य हेतुत्वं निरस्तम्। एवं च विहितस्याननुष्ठानान्नरः पतनमृच्छतीति स्मृतिरनुगृहीता भवति निमिषितादेस्तु हेतुत्वे विहिताकरणस्य किंचित्करणत्वाभावात् स्मृतिबाधापत्तिः एतां वाव स देवतामपरुणद्धि योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोतीति वापरोधशब्देनावज्ञाभिधानात्सैव प्रत्यवायहेतुर्वेदादवसीयते निमिषितादेस्तु हेतुत्वं निष्प्रमाणकमेव तस्मादवज्ञाख्याशयविशेषरूपस्य भावान्तरस्य तत्रसम्भवान्न शुद्धस्य क्वचिद्धेतुता दृष्टेति ग्रन्थार्थः। याप्यपूर्वेऽस्य दोषस्य तुल्यतोक्ता तामनुभाषणपूर्वं परिहरति * यत्विति * यत्त्वपूर्वस्य शास्त्रानन्तर्गतिरुक्ता तामप्यनुभाषणपूर्वं परिहर्तुमाह * यत्त्विति * अनन्तरफलत्वेऽप्यनेकाङ्गप्रधानसाहित्यमपूर्वं विना न सम्भवतीत्याशयः स्वर्गस्य ज्वरादिदुःखाननुविद्धकेवलसुखात्मकत्वेन परलोकानुभवनीयत्वेन च षष्ठाद्ये भाष्यकृता वक्ष्यमाणत्वात्तत्प्रतियोगित्वेन नरकस्य सुखाननुविद्धकेवलदुःखात्मकत्वेन परलोकानुभवनीयत्वेन च

१ पेक्षत्वेति २ पु॰ पा॰। नच तस्यौदासीन्यमात्रस्येति नास्ति

३७१।२ सूचयिष्यमाणत्वप्रतीतेरानन्तर्यासम्भवाच्छास्त्रार्थावधारणवेलायामे-
घ कर्मफलकालयोर्विप्रकर्षावगतेरपूर्वस्य शास्त्रान्तर्गतिरस्तीत्याह
*स्वर्गेति* निरतिशयत्वस्यालौकिकत्वे ऽपि शब्दे सुखदुःखात्मकत्वात्
सम्बन्धग्रहणासम्भवाच्चन्दनविष्ठादावुपचारेण स्वर्गनरकशब्दप्रयोगो-
पपत्तेर्वाक्यशेषे ऽप्यस्य सुखनिरतिशयावगतेर्निरतिशयसुखदुःखयो-
र्वाच्यत्वं सम्भवतीत्याशयः।ऐहिकस्यापि पुत्रादेरानन्तर्यं न सम्भवती-
त्याह * ऐहिकमिति * ग्रामादिप्राप्तेष्वानन्तर्यसम्भवे ऽपि चिरका-
लोपभोगयोग्यत्वेन ग्रामादेः पुरुषापेक्षावशात्फलत्वावगमात्तस्य चापू-
र्वं विनानुपपत्तेः सूत्रादप्यपूर्वस्य शास्त्रान्तर्गतिरस्तीत्याह *न चेति*
श्लोकं व्याचष्टे *चिरेति * एवं चानुष्ठानात्प्रागेव पूर्वान्तर्गत्यवधा-
रणाद्वैगुण्यकल्पनयार्थापत्तेः प्रतिबन्धो यो ऽभिहितः सो ऽप्ययुक्त
इत्याह * अतश्चेति * यापि निषेधेष्वपूर्वानन्तर्गतिरुक्ता तामप्यनु-
भाषणपूर्वकं परिहरति * यत्त्विति * विधिवन्निषेधस्यापि शास्त्र-
त्वात्तद्विषयस्य हननादेरपि शास्त्रीयतास्तीत्याशयः । हननादेर्लौकिक-
त्वाद्वैदिकापूर्वजनकत्वानुपपत्तिशङ्कां निरस्यन् श्लोकं व्याचष्टे *यथा
हीति * एवमसर्वस्य विरोधित्वासम्भावित्वे निरस्येदानीमनुपपाद-
कत्वं निरसितुं कल्पितमपि चेत्यनेनोक्तं निष्क्रियत्वं तावत् सा-
ध्यसाधनसम्बन्धानुपपादकत्वे हेतुं निरस्यति * सत्यपीति * नि-
श्चलस्याप्ययस्कान्तादेर्देशान्तरे कार्यारम्भकत्वदर्शनाच्चलनाख्यक्रि-
याराहित्यनिमित्तो यः कार्यारम्भासामर्थ्यरूप उपालम्भो दोष उक्तः
सो ऽप्ययुक्त इत्याशयः। निश्चलस्याप्यात्मनः प्रयत्नाख्यक्रियावत्त्वेन
देशान्तरे शरीरप्रापणसामर्थ्यदर्शनाच्चलनादीत्यादिशब्देन यत्रोपा-
दानं प्रापणादीत्यादिशब्देन शरीरोत्पादनमुपभोग्यविषयोपनयनं
चोपात्तं यापि स्थाय्याश्रयासम्भवेनानुपपादकतोक्ता तामपि निर-
३७२।२ स्यति * आत्मैव चेति * यत्वपूर्वजनिकायाः प्रक्षेपादिक्रियाया द्र-
व्याश्रितत्वात्तद्व्यतिरिक्ते यजमानात्मन्यपूर्वारम्भकत्वं न सम्भवती-
त्युक्तं तत्परिहरति* क्रियापीति । ननु प्रक्षेपादिक्रियायाश्चलनात्मक-
त्वात्सर्वगतात्माश्रितत्वं न युक्तमित्याशङ्क्याह * आत्मवाद इति *
द्व्यवदानचलनहेतुभूतशरीरचलनात्मकस्य प्रक्षेपादेः प्रयोजक-
व्यापारत्वात्प्रयोज्यव्यापारद्व्यवदानवत्कर्मभूतद्रव्याश्रितत्वानुपपत्तेः
कर्त्राश्रितत्वस्यैव न्याय्यत्वाच्छरीरचलने ऽपि चात्मन एव कर्तृत्व-
स्यात्मवादे सूचितत्वाच्चलनस्य शरीराश्रितत्वे ऽपि तदवच्छिन्नस्य
शरीरचालनात्मकस्य प्रयत्नस्य भावनात्मकस्यापूर्वजनकस्यात्म-
न्यपूर्वारम्भकत्वं युक्तमित्याशयः । एतदेव व्याचष्टे * द्व्यवदानेति*

नन्वात्माश्रितत्वे ऽपि क्रियायाः क्षणिकत्वेनोत्पन्नमात्रविनाशिन्यास्ते-
नोत्पद्यविनष्टत्वान्नास्यारम्भक्षणो ऽपि हीत्यनेन न्यायेनापूर्वारम्भ-
कत्वं न सम्भवतीत्याशङ्क्याह *अतश्चेति*आशुतरविनाशः क्षणिक-
त्वं नोत्पन्नविनाशित्वेत्याशयः। नन्वात्माश्रितत्वे ऽपि क्रियायाः स्वस-
मवेतापूर्वाख्यशक्तिजनकत्वानभ्युपगमे क्रियापूर्वयोः काष्ठज्वलनव-
द्धर्मधर्मिभावाभावेनात्यन्तभेदापत्तेः श्रुतक्रियासाधनत्वानिर्वाहप्रस-
ङ्गात् स्वसमवेतापूर्वजनकत्वस्य बलादभ्युपगमनीयत्वापत्तेः क्रिया-
विनाशे तदाश्रितस्यापूर्वस्यापि काष्ठविनाश इव ज्वलनस्य विनाशे
फलोत्पत्तिकालं यावदनवस्थानाच्छ्रुतसाध्यसाधनसम्बन्धोपपाद-
कत्वं न सम्भवतीत्याशयेनाशङ्कते * कथमिति * द्रव्यमेव विशि-
ष्टशक्त्युपेतं व्यापारशब्दवाच्यं भवतीत्यनेन न्यायेन क्रियात्मनोरत्य-
न्तभेदाभावेनात्मसमेवतस्यापूर्वस्य क्रियातो ऽत्यन्तभेदाभावात् सा-
ध्यसाधनसम्बन्धोपपादकत्वं सम्भवतीत्याशयेन परिहरति * अत्रे-
ति * शङ्कापरिहाराशयौ प्रकटयति * कथमिति * आत्मसमवाये
कर्मशक्तित्वं विरुध्यतइत्याशङ्कार्थः।किं चाग्न्यादेरप्यदृष्टे ऽस्यातिशय-
स्य दाहादिकार्यसाधकत्वोपपादकत्वमेवाग्न्यादिशक्तित्वं नाग्न्या-
दिसमवेतत्वं भास्वरत्वादेरग्न्यादिसमवेतत्वेनापि तच्छक्तित्वाप्रसि-
द्धेः स्मृतिहेतौ च संस्कारे स्मर्त्रात्मसमवेते ऽपि संवित्सामर्थ्य-
भाविनः स्मरणादित्यादिप्रयोगादनुभवशक्तित्वप्रसिद्धिरतो ऽन्यसम-
वाये ऽपि कर्मशक्तित्वाविरोध इत्याह * अपि चेति * श्लोकं व्या-
चष्टे * यदेति*नैतावता कर्मशक्तित्वहानिरिति शेषः। यच्चाराद‍ु-
पकार्यङ्गापूर्वाणां प्रधानसम्बन्धाभावे तदुपकारित्वं न सम्भवति प्र-
धानसाधनशब्दसमवायात्तु प्रधासम्बन्धाभ्युपगमे वपनादिवत् स-
न्निपत्योपकारित्वापत्तेराराद‍ुपकारित्वं विरुध्येतेत्युक्तं तदपि निर-
स्यति *तथेति* वपनादेरात्मनेपदेन लिङ्गेन वा वपनाद्याश्रयभूतप्र-
धानसम्बन्धियजमानशेषत्वात् सन्निपत्योपकारित्वं ज्ञातं तेषां त्वा-
श्रयशेषत्वाभावात् सन्निपत्योपकारित्वानापत्तेर्नाराद‍ुपकारकत्ववि-
रोध इत्याशयः। यत्त्वङ्गानां यजमानशेषत्वाभावात् सन्निपत्योपका-
रित्वाभावे ऽपि अङ्गापूर्वाणां यजमानाश्रितत्वाभ्युपगमे ऽपूर्वस्य
योग्यतालक्षणत्वाद्यजमानेन च फलभोक्तृत्वएव योग्यतापेक्षणात्फ-
लभोक्तृत्वयोग्यतापादकत्वात् प्रधानवत्पुरुषार्थत्वापत्तेः कर्माङ्गत्व-
म् * हीयेतेत्युक्तम् * तदप्यनुभाषणपूर्वकं निरस्यति * यत्त्वि-
ति * तदुद्देशविधिविषयत्वलक्षणतादर्थ्यहेतुकत्वाच्छेषत्वस्याङ्गा-
नां च पुरुषोद्देशेनाविधानात्प्रधानस्य च फलसाधनत्वयोग्यताधा-

नेन योग्यत्वलक्षणाविरोधात्पुरुषाश्रितत्वमात्रेण तच्छेषत्वं वा- च्यं न च तत्सम्भवतीत्याशयः । आश्रितत्वस्य शेषत्वाहेतुत्वं दृष्टान्तेनोपपादयति * राजार्थेति * राजशेषभूतस्याङ्गानुलेपस्याँ- पयिकमित्यर्थः । न च पतनप्रतिबन्धलक्षण एवाश्रयाश्रयिभावो विव- क्षितः येनामूर्त्तानां न स्यादित्याह * न चेति * नन्वारादुपकार्य- ङ्गापूर्वाणामात्माश्रितत्वात् स्थायित्वेनोपकारित्वोपपत्तावपि सन्निप- त्योपकार्यङ्गापूर्वाणां संस्कार्यव्रीह्यादिनाशे नाशात् स्थायित्वाभावेनो- पकारित्वं न सम्भवतीत्युक्तमत आह * यत्त्विति * व्रीहिसमवा- यिनो ऽप्यपूर्वस्य तन्नाशे नाशात्तण्डुलादौ सञ्चारासम्भवमाशङ्क्य व्रीह्यादिद्रव्यस्यैवावस्थाविशेषस्तण्डुलादिरूप इत्युक्तं न व्रीह्यादिरूपं संस्कार्यं किं तु तदुपलक्षितं प्रधानापूर्वसाधनीभूतं द्रव्यं तच्चावस्था- भेदे ऽप्याहवनीयप्रक्षेपात्प्राङ्न विनश्यतीत्याशयः।यत् व्रीहिसमवा- य्यपूर्वं तत्तण्डुलादिषु व्रीह्यादिद्रव्यावस्थासु सञ्चरणपरम्परया ह्यव- दानपर्यन्तं गतमिति तच्छब्दाध्याहारेण योज्यम् । ननु ह्यवदानपर्यन्तं गमने ऽपि तस्याहवनीयप्रक्षेपान्नाशे सति तद्गतस्यापूर्वस्यापि ना- शान्न प्रधानापूर्वोपकारित्वं सम्भवतीत्याशङ्क्याह *तत्रापीति* प्रोक्ष- णादिजनितापूर्वाशिष्टह्यवदानसाधितस्यैव प्रधानस्य स्वापूर्वनिष्पादक- त्वात्प्रधानीयापूर्वनिष्पत्तौ व्यापृत्य प्रोक्षणादिजनितमपूर्वं निवर्त्तते नश्यति।ननु प्रधानापूर्वमनिष्पाद्येत्युक्तम्। ननु क्रियाख्यत्रेव च स्थितेति यागादेः प्रधानस्यात्मनि समवायाभिधानात् प्रक्षेपादेश्च ह्यवदान- चलनहेतुभूतशरीरचलनात्मकत्वादात्मन्यसमवाये ऽपि प्रयोजकव्या- पारत्वात् शरीरसमवेतत्वेन ह्यवदानसमवायाभावात्तद्गतस्य प्रो- क्षणादिजन्यस्यापूर्वस्य प्रधानसम्बन्धानुपपत्तेः कथं तदीयापूर्वनि- ष्पत्तौ तद्व्यापार इत्याशङ्क्य * तत्रापीत्युक्तम् * देवतोद्देशद्रव्य- त्यागात्मकप्रयोजकव्यापाररूपांशद्वययुक्तस्य यागाख्यप्रधानस्य या- वंशावुद्देश्यदेवतात्याज्यद्रव्ययोः प्रयोज्ययोर्व्यापारौ प्रयोजकव्या- पारान्यथानुपपत्तिकल्पितौ तयोर्मध्ये यस्त्याज्यस्य द्रव्यस्य त्यागां- शं प्रयोजकव्यापारं प्रति प्रयोज्यस्य व्यापारस्त्यागद्वारा प्रधानस्यां- शस्तेन ह्यवदाने प्रधानस्य समवायाद्धोमाख्यस्य च प्रधानस्य दे- वतोद्देशद्रव्यत्यागप्रक्षेपात्मकप्रयोजकव्यापाररूपांशत्रययुक्तस्य त्या- गप्रक्षेपौ प्रयोजकव्यापाररूपावंशौ प्रति प्रयोज्यस्य त्याज्यस्य प्रक्षे- पस्य द्रव्यस्य यौ व्यापारौ त्यागप्रक्षेपद्वारेणांशौ ताभ्यां तद्ध्य- वदाने प्रधानस्य समवायादित्यर्थः । स्वमते च कृतस्य पुरोडाशस्य यागसाधनत्वाद् ह्यवदाने यागस्य समवायो भाष्यकारमतेनोक्तः

ननु सर्वाङ्गानुष्ठानोत्तरकालं समस्ताङ्गापूर्वाणां युगपत्प्रधानोपका-
रसाधनत्वस्य वक्ष्यमाणत्वात्प्रधानापूर्वनिष्पत्तौ व्यावृत्त्यनिवृत्तिरयु-
क्तेत्याशङ्कानिरासायैवकारः आरादुपकार्यङ्गविषयो ऽसौ समस्तश-
ब्द इत्याशयः। सन्निपत्योपकार्यङ्गापूर्वाणां प्रधानापूर्वनिष्पादनमात्रेण
पर्यवसानं तेषामर्थाधिकरणे वक्ष्यमाणया व्यवस्थयोपपादयति *
तेनैव चेति * यच्च युगपत्प्रयोगवचनग्रहणावगतमङ्गापूर्वाणां प्र- ३७३।१
धानोपकारे प्रधानापूर्वाणां च फले यौगपद्यमन्योन्यसम्बन्धाभावा-
च्च सम्भवतीत्युक्तम्। तदपि निरस्यति*यथैव चेति * यथाङ्गापूर्वा-
णां प्रधानापूर्वाणां चान्योन्यसम्बन्धस्तथारादुपकार्यङ्गापूर्वाणामे-
कात्माश्रितत्वेनान्योन्यसम्बन्धाद्युगपत्प्रधानोपकारलक्षणकार्यारम्भ-
सिद्धिः।प्रधानापूर्वाणामप्येवमेवान्योन्यसम्बन्धात्फलाख्यकार्यारम्भ-
सिद्धिरित्यर्थः । ननूक्तेन न्यायेनाङ्गप्रधानापूर्वाणां स्थायित्वे सम्ब-
न्धे च सम्भवत्यपि प्रधानापूर्वनिष्पादनमात्रेणाङ्गापूर्वाणां विनाश-
स्योक्तत्वात्। प्रधानापूर्वाणां क्रमोत्पत्तित्वेनाङ्गापूर्वाणां प्रधानसम-
कालानां क्रमवर्त्तित्वापत्तेः। प्रागूर्ध्वं चोत्पद्यमानानामत्यन्तविप्रकर्षा-
त्साहित्यानुपपत्तेर्न युगपदुपकारः सम्भवतीति शङ्कते * कथं पु-
नरिति * सन्निपत्यारादुपकारिणां सर्वेषां प्रधानापूर्वनिष्पत्तौ
व्यापारमाशङ्कावाद्यभिमतमभ्युपगम्यैव तावन्निष्पन्नानामङ्गापूर्वाणां
स्वरूपेणानागतानां च कर्त्तव्यत्वावधारणेन यौगपद्यमुपपादयति
* केचित्तावदाहुरिति * समस्ताङ्गोपेतप्रधानप्रयोगप्रक्रमादागा-
मिनामपि तात्स्थ्यावस्थायाः प्रचलितत्वात्प्रधानसहायतोपपन्नेत्य-
र्थः । न त्वेवं सर्वाङ्गापूर्वाणां यौगपद्योपपत्तावपि एकप्रधानापूर्व-
निष्पत्तौ विनष्टत्वात्प्रधानान्तरसहकारित्वानुपपत्तेरेकैकमिति वी-
प्सा न युक्तेत्याशङ्क्याह * आतिथ्येति * यदातिथ्यायां बर्हिस्त-
दुपसदां तदग्नीषोमीयस्येति श्रुतेः साधारणार्थतया चतुर्थे वक्ष्यमा-
णत्वाद्यथातिथ्यायामुपात्तस्य बर्हिषस्तत्समाप्तावपि नापवर्ग इति च-
तुर्थसिद्धो दृष्टान्तः अनागतानामसत्त्वान्नोपकारित्वं सम्भवती-
ति शङ्कते * कथं पुनरिति * स्वरूपासत्त्वे ऽपि कर्त्तव्य-
त्वावधारणमात्रेण हेतुतान्यत्रापि दृष्टत्वादुपपन्नेति परिहरति
* एकान्तेति*नन्वेवं सत्युत्पत्त्युत्तराङ्गानुष्ठानवैयर्थ्यं स्यादिति शङ्कते
* ननु चेति * समस्ताङ्गोपेतप्रधानानुष्ठानोपदेशान्यथानुपपत्त्या-
त्तराङ्गानुष्ठानसहकृतानां प्रधानापूर्वाणां फलापूर्वनिष्पादकत्वावग-
तस्तदकरणे सहकार्यभावे निष्पन्नान्यपि प्रधानापूर्वाणि स्वकार्यं

१ तेषामर्थेन संबन्ध इति तृतीये ।

फलापूर्वं न निष्पादयन्तीत्याशयेन परिहरति *कथमिति* कार्यापवर्गित्वादपूर्वाणामपवर्गेण कार्यानिष्पादकत्वं लक्षितं कर्त्तव्यत्वावधारणस्याविहितत्वात्प्रधानोपकारित्वकल्पनानुपपत्तेरुत्तराङ्गविधीनां कर्त्तव्यत्वावधारणपरत्वाभ्युपगमे यानुष्ठानस्याविहितत्वात्प्रधानापूर्वसहकारित्वकल्पनानुपपत्तेर्वेधे चार्थे प्रमाणान्तरानवतारादनेन प्रकारेण यौगपद्यानुपपत्तेरपरितोषात्स्वमतेन सन्निपत्योपकार्यङ्गापूर्वाणां प्रधानापूर्वनिष्पत्तौ सहकारित्वात्तेषां चात्मीयप्रधानापूर्वनिष्पत्तावपवर्गे ऽपि फलापूर्वनिष्पत्तौ सहकारिणामारादुपकार्यङ्गापूर्वाणां फलापूर्वनिष्पत्तेः प्रागनपवर्गाद्यौगपद्यं सम्भवतीति दर्शयितुमपूर्वोत्पत्तिप्रक्रियामाह*अन्येपुनरिति * प्रधानानामन्योन्याङ्गत्वाभावे ऽपि तत्क्रमस्याङ्गत्वात्पूर्वं प्रधानमकृत्वोत्तरप्रधानानुष्ठाने ऽप्यपूर्वानिष्पत्तेस्तदानुत्पन्नेत्युक्तम्।पाश्चात्यानां सामवायिकानां प्रतिपत्तित्वात्तस्याश्च क्रत्वर्थोपात्तद्रव्यनाशदोषपरिहारनिमित्तक्रतुवैगुण्यापत्त्या कदा चिन्निष्पन्नस्याप्यपूर्वस्य नाशापत्तेस्तत्परिहारार्थं प्रक्रान्तद्रव्यक्रतुसम्बन्धसमापनार्थत्वेनापूर्वनिष्पत्त्यर्थत्वाभावात्प्रथमकृतेत्युक्तम् आरादुपकार्यङ्गापूर्वाणां प्रधानापूर्वनिष्पादकत्वनिरासार्थो मात्रशब्दः । ननु सामवायिकाङ्गापूर्वाणां प्रधानापूर्वनिष्पत्तौ व्यापारे सति तन्मात्रेणापवर्गात्फलापूर्वोत्पादकरूपप्रधानोपकारनिष्पत्तौ व्यापाराभावे सर्वेषां युगपत् प्रधानोपकारजनकत्वमेकदेशे वक्ष्यमाणं विरुध्यते इत्याशङ्क्यैवमित्याद्युक्तं सामवायिकाङ्गापूर्वानुगृहीतप्रधानजन्यत्वं सर्वेषां प्रधानापूर्वाणामेवंशब्देनोक्तम्।यद्यप्यारादुपकार्यङ्गापूर्वाणामेव प्रधानोपकारनिष्पत्तौ व्यापारस्तथापि प्रधानापूर्वेष्वनिष्पन्नेपूपकारानिष्पादनात्तन्निष्पत्तेश्च सामवायिकाङ्गाधीनत्वात्सर्वेषां युगपत् प्रधानोपकारजनकत्वाभिधानमिति दर्शयितुम् * यदेत्युक्तम् * परमार्थतः पौर्णमास्यमावास्याख्यस्यैकैकस्य प्रधानत्रिकस्य स्वाङ्गापूर्वानुगृहीतस्यैकैकस्वसमुदायापूर्वजनकत्वे ऽप्येकदेशिमतेन समुदायापूर्वाभावमभिप्रेत्य दर्शापूर्वाणां तदीयारादुपकार्यङ्गापूर्वाणां च प्रतीक्षणमुक्तम् सामवायिकाङ्गापूर्वसाध्यात् प्रधानापूर्वनिष्पादनात्मकात्प्रात्यात्मिकात्।प्रधानोपकाराक्रमवत्प्रधानानुसारितया क्रमेणोत्पद्यमानात्प्रधानवैचित्र्यतो विचित्रादारादुपकार्यङ्गापूर्वे साध्यस्यस्योपकारस्य आरादुपकारीण्यङ्गानि प्रतिसाध्यतया प्रधानानि च प्रत्यनुग्राहकतया साधारणरूपत्वेनादृष्टोपयोगित्वाच्चापूर्वात्मकत्वेन युगपदुत्पत्त्यैकरूपत्वेन वैलक्षण्यं दर्शयितुमङ्गानीत्याद्युक्तम्।तदुपपादनार्थं विधिस्त्वेकश्रुतित्वादपर्यायविधानादित्येकाद-

द्याधिकरणसूत्रावयवोक्तमपर्यायविधानमनुकीर्त्तितं व्याख्यातुम् *
युगपदित्युक्तम् * आरादुपकार्यङ्गापूर्वाणामखण्डोपकारनिष्पत्तेः
प्रागविनाशाद्यौगपद्यं सम्भवतीति सकलस्य तात्पर्यं कः पुनर्निष्पा-
दनातिरिक्तः प्रधानापूर्वाणामारादुपकार्यङ्गापूर्वैरुपकारः क्रियतइत्य-
पेक्षायां फलापूर्वोत्पादनयोग्यताधानात्मकमुपकारं दर्शयितुमाह-
* तत इति * ननु फलापूर्वस्यापि संस्काररूपत्वाभ्युपगमात्सं-
स्कारस्यानुभवादिजन्यस्य कालविप्रकर्षेण क्षीणत्वस्य चात्यन्तं ना-
शस्य चोपलम्भादपूर्वान्तरवत्फललाभात्प्रागपि नाशापत्तेः साध्यसा-
धनसम्बन्धोपपादकत्वं न स्यादित्याशङ्क्याह * तत्त्विति * फल- ३७४।१
लाभार्थत्वेनैव तस्य कल्पितत्वात्तत्पर्यन्तं तस्य स्थायित्वमक्षीणत्वं
च कल्पितमित्याशयः। ननु यत्र प्रतिबन्धकादिवशादनन्तरं फलं नो-
त्पद्यते तत्रास्तु नाम फलापूर्वकल्पनं यत्र त्वैहिकत्वात् पुत्रादिवद-
दृष्टकारणानपेक्षत्वादनन्तरमप्युत्पत्तुं शक्तं प्रतिबन्धकाभावादनन्त-
रमप्युत्पद्यते तत्र तत्कल्पनं विनापि साध्यसाधनसम्बन्धोपपत्तेर-
वान्तरापूर्वद्वारा चाङ्गप्रधानसाहित्योपपत्तेर्यस्य च शब्दस्यार्थेन
फलं साध्यते तेनापूर्वं कृत्वा नान्यथेति फलापूर्वस्य सार्वत्रिकत्वा-
भिधानमयुक्तमिति कोमलोक्त्या शङ्कते * यदि पुन रिति * त-
थापीत्यर्थे ततो ऽपीत्युक्तम्। अनन्तरं फलोत्पत्तावप्यपूर्वं विना चिर-
कालोपभोगासम्भवस्योपभोगश्चिरेणैषां न निमित्ताद्विना भवेदि-
त्यत्रोक्तत्वात्कल्पनीयं फलापूर्वमिति परिहरति * बाढमिति *
नन्वपूर्वस्य चिरकालस्थायित्वाभ्युपगमे अङ्गापूर्वाणामेव साक्षात्प्रधा-
नोपकारकत्वोपपत्तेरखण्डोपकारापूर्वकल्पनं व्यर्थं प्रधानापूर्वाणां च
साक्षात्फलजनकत्वोपपत्तेः फलापूर्वकल्पनं व्यर्थमित्याशङ्कते *अथे-
ति * प्रात्यात्मिकशब्देन प्रत्येकमेकैकाङ्गजन्यतोक्ता साक्षात्तेषां ज-
नकत्वसम्भवे ऽपि कल्पकक्रमानुरोधेनैवक्लृप्तमिति परिहरति
* सत्यमिति * निषेधार्थं न हीत्यखण्डं पदं श्लोकं व्याचष्टे * प्र-
धानानामिति * उत्पत्तिवाक्यावगतभेदानामपि प्रधानानां फला-
न्वयात्प्रागङ्गानां च प्रधानोपकारान्वयात्प्रागपूर्वानपेक्षत्वात्तदन्वय-
काले च यौगपद्यप्रतीतेर्भिन्नापूर्वकल्पनाहेत्वभावादेकमेव फलापू-
र्वमुपकारापूर्वं च प्रतीयते प्रयोगकाले तु क्रमप्रतीतेः स्वरूपतः सा-
हित्यायोगात्साहित्यसम्पत्त्यर्थं प्रात्यात्मिकानेकापूर्वकल्पनेत्यर्थः।
नन्ववश्यकल्प्यैः प्रात्यात्मिकापूर्वैरेव साहित्यवत्फलसाधनोपकारा-
न्वययोरप्युपपत्तेर्गौरवापादिका प्रागेकापूर्वकल्पना न युक्तेत्याश-
ङ्क्याह * सर्वत्र चेति * प्रत्यात्मिकापूर्वाणां साहित्यसिद्ध्यर्थं क-

ल्पितत्वात्कार्यान्तरोपयोगित्वं न सम्भवतीत्याशयः । प्रौढ्या तु तेषां कार्यान्तरोपयोगित्वे ऽप्यदोष इति प्रागुक्तं तस्मात्फलापूर्वमेव समस्तफलोपभोगपर्यन्तं स्थायि कल्प्यते तदुत्पादनमात्रेण तु प्रधानापूर्वाणां नाशः । आरादुपकार्यङ्गापूर्वाणां प्रधानोपकारोत्पादनेन सामवायिकाङ्गापूर्वाणां प्रात्यात्मिकप्रधानापूर्वोत्पादनेनेति व्यवस्था सिद्धेति तात्पर्यार्थः । यत्त्वस्मिन्पक्षे पौर्णमास्यां निष्पन्नानामङ्गापूर्वाणां दार्शब्राह्मणतर्पणानन्तरमुपकारोत्पादनेनापवर्गाभिधानात्तावत्कालं स्थायित्वमुक्तं तदमावास्यायां पुनरनुष्ठेयत्वापत्त्या दूषयति * के चित्त्विति * को ऽननुष्ठेयत्वापत्तौ विरोध इत्याशङ्क्य * आहैवञ्चेति * प्रधानाहुत्योर्द्वसङ्ख्यत्वादङ्गाहुतीर्विना न त्रयोदशसङ्ख्या सम्पद्येतेत्याशयः । पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्ययेति पौर्णमास्यमावास्याख्ययोस्त्रिकयोः करणत्वप्रतीतेस्तस्य च साधकतमत्वलक्षणत्वात्तमवर्थस्यातिशयस्यापेक्षिकत्वेनाङ्गसाहित्यं विनानुपपत्तेरङ्गसाहित्यावगमात्तस्य चानुपादेयकालं प्रत्युपादेयत्वेन विवक्षितत्वादेकैकस्य त्रिकस्य फलसाधनत्वाभावेनानुपकार्यत्वात् त्रिकद्वयस्यैकस्मिन्काले ऽनुत्पन्नस्योपकर्त्तुमशक्यत्वादुपकारानिष्पत्तौ चाकृतकार्यत्वेनाङ्गापूर्वाणामपवर्गाभावे ऽपि वचनबलाद्विःप्रयुक्तानामुपकारकत्वाकल्पनया द्विरनुष्ठानं सेत्स्यतीत्येकदेशिनां दूषणपरिहाराभिप्रायमाशङ्कते * अन्ये त्विति * यैः प्रयोगद्वयान्ते ऽङ्गापूर्वाणामपवर्गः प्रागुक्तस्त एवान्यशब्देन परामृष्टा त्रिः सम्मार्ष्टीत्यादिवदावृत्त्य विधानात् । सकृत्प्रत्प्रयुक्तानामेवोपकारकत्वोपपत्तेरपवर्गाभावे पुनः प्रयोगानर्थक्यापत्तेरपरिहार्यत्वात् स्वमतेन पौर्णमास्यान्निष्पन्नानामङ्गापूर्वाणां पौर्णमास्याख्यप्रधानत्रयसमुदायापूर्वनिर्वृत्तावपवर्गं दर्शयितुमाह * अथ वेति * कथं प्रधानापूर्वत्रयस्यैकसमुदायापूर्वजनकत्वावगतिरित्यपेक्षायां पौर्णमास्येति तृतीयाश्रुत्या करणत्वावगमादित्युक्ते ननु फलापूर्वमेव प्रति करणत्वं भविष्यतीत्याशङ्क्य समर्थः पदविधिरिति पदमात्रविधेः सामर्थ्याधीनत्वस्मरणात् सापेक्षत्वे च सामर्थ्यविघातापत्तेर्विभक्तिश्रुत्यामावास्यानैरपेक्ष्यावगमात्पौर्णमास्यसहितामावास्यया स्वार्थं समुदायापूर्वं करोतीत्यकारप्रश्लेषेणोक्तम् । अङ्गापेक्षा तु करणश्रुत्याक्षिप्तत्वान्न सामर्थ्यविघातिकेति साङ्गेत्यनेन सूचितम् । यद्वा साङ्गा पौर्णमासी स्वार्थं समुदायापूर्वं करोति अमावास्याप्यमावास्ययेति करणविभक्तिश्रुतेरङ्गसहिता स्वार्थं समुदायापूर्वान्तरं करोतीति योज्यम् । यदि त्वमावास्याख्यसमुदायसहितस्य पौर्णमास्याख्यसमु-

दायस्य दर्शपूर्णमासाभ्यामिति करणविभक्तिश्रुतेः स्वार्थफलापूर्वसाधनत्वावगमात्समुदायद्वयस्य चापूर्वं विना साहित्यानुपपत्तेः। समुदायापूर्वजनकत्वावगतिरित्येवं व्याख्यायते ततः साहित्यस्य द्वन्द्वावगम्यत्वाद्विभक्तिगम्यत्वाभिधानं तावद्युक्तं समुदाययोश्च फलसाधनत्वाभ्युपगमे पौर्णमास्यधिकरणे तन्निरासादरो ऽपि विरुध्येत अङ्गापूर्वाणां प्रधानोपकारापूर्वोत्पादनमात्रेण निवृत्तिसूचनार्थम् * पूर्वोक्तेनैवेत्युक्तम् * पौर्णमासीकालीनेष्वङ्गापूर्वेषु पौर्णमास्याख्यप्रधानत्रयोपकारं कृत्वा निवृत्तेष्वङ्गापूर्वजनितानुग्रहविशिष्टं पौर्णमास्याख्यप्रधानापूर्वत्रयम् एकं समुदायापूर्वं कृत्वा अपवृज्यत इत्यर्थः फलापूर्वस्य तर्हि कथं निवृत्तिरित्याशङ्क्याह * तत्पुनरिति * स्वाङ्गापूर्वजनितानुग्रहविशिष्टामावास्याख्यप्रधानापूर्वत्र- ३७५।१
यजन्यतामावास्याख्यसमुदायापूर्वस्यैवंशब्देनोक्ता समुदायापूर्वद्वयाभ्युपगमस्य प्रकृतोपयोगमाह *अत श्चेति * समुदायापूर्वद्वयाभ्युपगमे पौर्णमास्याख्यसमुदायापूर्वजननार्थं पौर्णमास्याख्यप्रधानापूर्वत्रयेण स्वाङ्गापूर्वजनितोपकारापेक्षणादुपकारनिर्वृत्तौ च कृतार्थतया पौर्णमासीनिष्पन्नाङ्गापूर्वनाशादमावास्यायां पुनः प्रयोगानर्थक्यदोषाभावः। तदनभ्युपगमे त्वकृतार्थत्वात्पौर्णमास्यां निष्पन्नानामङ्गापूर्वाणां नाशायोगात्पुनः प्रयोगानर्थक्यदोषो दुःपरिहर इत्यर्थः। यद्यप्यपूर्वस्य कर्मभिरुत्पत्तिरभिव्यक्तिर्वेति विकल्पोत्पत्तिरपि युगपत्तावन्न सम्भवति क्रमवर्त्तित्वात्कर्मणामित्युक्तं तदप्यपूर्वद्वारा कर्मणां यौगपद्योपपादनात्सुपरिहरमित्याह * एतयैवेति * क्रमवर्त्तिनामपि कर्मणामवान्तरकार्ययौगपद्यद्वारा युगपत्परमकार्यारम्भकत्वं वृद्धोदाहृतेन दृष्टान्तेनोपपादयितुमाह * आह चेति * वाक्यतदवयवाध्ययनरूपेण क्रमवर्त्तिनीभिरावृत्तिभिरभ्यासकर्मभिर्यथावान्तरसंस्कारयौगपद्यद्वारा वाक्यसमुदायात्मकाध्यायग्रहणसामर्थ्यरूपः परमसंस्कारो युगपद्भवति तथेदमपीति श्लोकार्थः। यच्चानवयवत्वात् क्रमशो ऽप्युत्पत्तिर्न सम्भवतीत्युक्तं तदपि प्रौढ्या सावयवत्वाभ्युपगमेन निराकर्त्तुमाह * न चेति * आत्मादावमूर्त्ते निरवयवत्वदर्शनादपूर्वस्यामूर्त्तत्वेन निरवयवत्वं वाच्यम्। न चामूर्त्तत्वं निरवयवत्वे प्रयोजकं मूर्त्तेष्वपि परमाणुषु निरवयवत्वादर्शनादनेकप्रयोजककल्पनापत्तेः। किं त्ववयवसन्निवेशानात्मकतेत्याशयः। नन्वपूर्वस्यावयवसन्निवेशानुपपत्तेर्निरवयवत्वं भविष्यतीत्याशङ्क्याह * अनयैवेति *कारणायौगपद्याद्युगपदुत्पत्त्ययोगात्क्रमोत्पत्तिप्रतीतेस्तस्याश्च निरवयवत्वे ऽनुपपत्तेः। सूक्ष्मदर्शनायोग्यावयवसन्निवेशरूपेणापूर्वं

प्रतीयतउत्पद्यतइत्यर्थः । अस्मिंस्तु पक्षे सर्वेषामेकफलसाधनानां प्रधानानां साक्षादेकफलापूर्वसाधनत्वाभ्युपगमात्सर्वेषां चाङ्गानां साक्षादेककरणोपकारापूर्वसाधनत्वाभ्युपगमात्कर्मभेदानुनिष्पाद्यपूर्वभेदाभ्युपगमो विरुध्येत।तदभावे चाज्यौषधमांससान्नाय्यादिधर्मव्यवस्था तार्त्तीया वाङ्नियमादेश्चावान्तरापूर्वप्रयुक्तत्वंनावमिकं न सिद्ध्येदित्यवश्यं प्रतिकर्मापूर्वभेदस्य कल्प्यत्वात्तद्द्वारा च क्रमवर्त्तिनामपि कर्मणां युगपदपूर्वोत्पादकत्वोपपत्तेर्नार्थापत्तिरवयवकल्पनायै प्रभवति कल्पितानामपि चावयवानाममूर्त्तत्वेनान्योन्यानवष्टम्भकत्वान्नावयवारम्भकत्वसम्भवः । मूर्त्तत्वकल्पने तदारब्धस्यापूर्वस्यापि मूर्त्तत्वापत्तेर्विग्रहवदिव स्वतन्त्रमपूर्वं कल्प्यमानं श्रुतकर्मफलसम्बन्धबोधकमेव स्यादिति प्रौढिमात्रमिदं प्राक् सत्त्वे प्रमाणाभावाच्छक्तिनियमाच्च कार्यकारणनियमासिद्धेरभिव्यक्तेरप्यत्यन्तासत्या एवोत्पत्तेरवश्याभ्युपगन्तव्यत्वात् सांख्योक्तसत्कार्यवादानुपपत्तेरनभिमतमप्यभिव्यक्तिपक्षं प्रौढ्या दर्शयति * यदापीति * फलदानाभिमुख्यकरणरूपास्यापूर्वस्याभिव्यक्तिर्विषयेन्द्रियोभयसंस्काररूपत्वात्शब्दादिविलक्षणा कर्मभिर्भविष्यतीत्युक्ते कथं कर्मभिरपूर्वस्य फलदानाभिमुख्यं क्रियतइत्यपेक्षायां प्रतिपुरुषं स्वीकारादित्युक्तम्।प्रतिग्रहेणेव कर्मभिः कर्त्तारं प्रत्यपूर्वस्य स्वत्वापादनादित्यर्थः । नन्विन्द्रियसंस्कारेण विषयसंस्कारेणोभयसंस्कारेण वा लोके शब्दाद्यभिव्यक्तिदर्शनात्कथं तद्विलक्षणास्याभिव्यक्तिः कल्प्यतइत्याशङ्क्याह * तथा हीति * कुलालादिव्यापारेणापि घटाद्यभिव्यक्तेः सांख्यैरिष्टत्वादिति भावः।तस्मादात्मनाधिष्ठितस्यापूर्वस्य फलदानोन्मुखत्वलक्षणाभिव्यक्तिर्युक्तेति परिहरति * आत्मस्थेति * आत्मकामादिश्रुतितो वात्मनः स्वभावेन सर्वफलावाप्तिः सामर्थ्यावगमात्फलानुपभोगस्य प्रतिबन्धनिमित्तत्वावगतेस्तदपनयनरूपाभिव्यक्तिः सामर्थ्यात्मकस्यापूर्वस्य कर्मभिः क्रियते नादैरिव शब्दस्य श्रवणप्रतिबन्धकास्तिमितवाताद्यपनयरूपेति प्रौढ्या शब्दतुल्यामेवाभिव्याक्तमाह* सर्वेति * आप्तकामादिश्रुतेरनुपलब्धिविरोधेनार्थवादत्वादयमपि प्रौढिवादः।अतो ऽपूर्वस्य श्रुतार्थापत्तिप्रमाणकत्वात्तत्प्रतिपादनार्थत्वेन भाष्यकारीयं सूत्रव्याख्यानं युक्तमित्युपसंहरति * तस्मादिति*यच्च वृत्त्यन्तरकारैरारभतेर्णिजन्तादच्प्रत्ययमुत्पाद्यारम्भयति प्रवर्त्तयतीत्यारम्भकं प्रवर्त्तकं वाक्यं चोदनेति चोदनास्वरूपकथनार्थतया एतत्सूत्रं व्याख्यातं तत्प्रकृतापूर्वप्रतिपत्त्युपायशब्दचिन्तानौपयिकत्वाच्चोदनास्वरूपकथनार्थत्वे चास्य सूत्रस्य चोदनासूत्रानन्तरं

कर्त्तव्यत्वापत्तेरयुक्तमित्याह * सूत्रस्यापीति * यदपि न चैतत्सूत्रं तत्प्रतिपादने स्पष्टमित्युक्तं तन्निरासायापूर्वप्रतिपादने सूत्रं यथाभाष्यं योजयति * तेनेति * आरम्भःशिष्यतइति भाष्येणारम्भप्रातिपदिकात्फलोत्पादनवाचिनस्तत्करोति तदाचष्टइति स्मृतेरारम्भमाचष्टे इत्यस्मिन्नर्थे णिचमुत्पाद्याच्प्रत्ययकरणेनारम्भ फलोत्पादनमाचष्टे इत्यारम्भशब्दव्याख्यानादारम्भश्चोदनेत्यारम्भशब्दार्थो लभ्यते चोदनेत्यपूर्वमित्यनेन च भावशब्दा अपूर्वस्य बोधका इति भाष्यदर्शनात् चोद्यतश्चाक्षिप्यते इति कर्मव्युत्पत्त्यापूर्वस्य चोदनात्वमुक्तमिति प्रतीतेश्चोद्यते ऽनेनेति करणव्युत्पत्तौ चोदनमिति भावव्युत्पत्तौ वा ऽपूर्वस्य चोदनेत्यर्थः। तेभ्यः क्रिया प्रतीयेतेति क्रियाशब्दस्य तेभ्यो ऽपूर्वक्रियावगतिरित्यनेन अपूर्वविषयत्वेन व्याख्यानात् तस्याश्च तस्मात्तेभ्यः क्रिया प्रतीयेतेत्यनन्तरसूत्रोपपत्त्यायुक्तमाशङ्क्य व्याचष्टे * यदि पुनरिति * कल्प्यस्य पूर्वस्यस्यानुवृत्तेर्विनैवाध्याहारेण लभ्यते कथमाख्यातेभ्यो ऽपूर्वं प्रतीयतइत्यपेक्षायां चोद्यते पुनराक्षिप्यते आख्यातेनापूर्वम्। अपूर्वस्य वा चोदकमाख्यातम्। आरम्भकत्वात्फलोत्पादनव्यापकत्वादित्यभिधानाच्च प्रकृतोपयोगी विस्पष्टश्चायमेव सूत्रार्थ इत्याशयेन यो भाष्यकृतोक्तः सूत्रार्थः स एव युक्तो न वृत्त्यन्तरकारोक्त इत्येवकारेणाभिधानात्तद्व्याख्यानार्थं भाष्यमपि व्याकृतं भवति। यदि पुनरित्याशङ्काभाष्यं नश्वरस्य कर्मणः स्थायित्वकल्पनानुपपत्तेरयुक्तमात्रमाशङ्क्य व्याचष्टे * यदि पुनरिति * कल्प्यस्यापूर्वस्य स्थायित्वकल्पनायाः सिद्धस्य कर्मणः स्थायित्वकल्पना लाघवाद्युक्तेत्याशयः। नैवमित्यादिपरिहारभाष्यमाक्षिपति * न हीति * गन्तापि प्रत्यक्षो देशान्तरं च तेन गत इति विजानात्यागत इति चेति गन्तृगम्यप्रत्यक्षत्वाभिधानेन गमनस्य प्रत्यक्षत्वाभिधानम्। अपि वा व्यतिरेकादुपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववदिति षष्ठाधिकरणसिद्धान्तसूत्रस्य रूपशब्दाविभागाच्चेत्यवयवं व्याख्यातुं यद्भाष्यकृता करिष्यते तद्विरोधो भङ्गीत्वाद्यागस्येति च विनाशित्वेन यागस्य प्रस्तुतत्वात्तस्य च देवतोद्देशपूर्वकद्रव्यस्य त्यागात्मकसङ्कल्परूपत्वेनाचलनात्मकत्वाद्देशान्तरप्रापकत्वं नास्तीत्यर्थः। नानेन प्रत्यक्षानुपलब्धिरुक्ता किं तु प्रतिक्षणविनाशिपूर्वापरीभूतावयवत्वात्सिद्धरूपा प्रतीतेः स्थायित्वरूपानुपलब्धिरित्येवं व्याख्यानेनाद्यं तावदाक्षेपं परिहरति
* अत्रेति * श्लोकं व्याचष्टे * यद्यपीति * स्वरूपेणाचलनात्म- ३७६।१
कत्वे ऽपि यागस्य चलनात्मकप्रक्षेपादिविशिष्टस्य फलसाधनत्वात्ते-

नांशेन चलनात्मकत्वमभिप्रेत्य देशान्तरप्रापकत्वाभिधानमिति द्वितीयमाक्षेपं परिहरति * यागे ऽपीति * श्लोकं व्याचष्टे * न हीति * यागग्रहणेन होमस्याप्युपलक्षणमभिप्रेत्य तस्य प्रक्षेपाधिकयागात्मकत्वात्समस्तादित्युक्तम् । कथं देशान्तरप्रापकत्वस्य स्थायित्वनिरासहेतुतेत्यपेक्षायामाह * तत्रेति * देशान्तरप्रापकत्वव्याख्यानार्थं संयोगविभागफलत्वं धात्वर्थानां वदता संयोगविभागयोर्धातुवाच्यत्वं निरस्तम् ।

त्यक्तं प्रतीतियुक्तिभ्यां भाष्यवार्त्तिकवारितम् ।
तयोर्धात्वभिधेयत्वं वदन्न व्रीडते कथम् ॥

निराश्रयस्य प्रक्षेपादेरवस्थानायोगात्तस्य स्थायित्वसिद्ध्यर्थं तदाश्रयेणापि स्थायिना भवितव्यं न चासावाश्रयः स्थाय्यस्ति संयोगविभागफलत्वेन प्रक्षेपादेः संयोगविभागयोग्यप्रादेशिकाश्रयापेक्षत्वात्तस्य स्थायिनो ऽनुपपत्तेः । स्थाय्याश्रयाभावात्कर्मणः स्थायिता न युक्तेत्याशयः । ननु चलनात्मककर्माश्रयस्य शरीरस्य कं चित्कालस्थायित्वोपपत्तेरैहिकफलानां तावत्कर्मणां फलोत्पत्तिं यावत् स्थायित्वं सम्भवतीत्याशङ्क्याह * न चेति * अनुष्ठानोत्तरकालं योग्यानुपलब्ध्या कर्मणो सत्त्वावधारणान्नाश्रयस्थायित्वे ऽपि स्थायिता युक्तेत्याशयः । न चाभिव्यञ्जकाभावेनानुपलब्धिरभिव्यक्तस्याप्यनुपलम्भादित्यभिव्यक्तिशब्देनोक्तम् । अयं भावः अनभिव्यक्तस्य फलसाधनत्वाभावादनुष्ठानेनाभिव्यक्तिर्वक्तव्या तस्याश्च क्षणिकत्वे संस्कारजनकत्वानभ्युपगमात्फलासिद्धेः स्थायिताङ्गीकार्येति अनेन चानुष्ठानोत्तरकालानुपलम्भाभिप्रायेणान्यथाभाष्यं व्याख्यातम् । ननु चलनात्मकस्य कर्मणः स्थाय्याश्रयाभावेनास्थायित्वे ऽपि सङ्कल्पादेः स्थाय्यात्माश्रयत्वात् स्थायित्वं भविष्यतीत्याशङ्क्याह * सङ्कल्पेति * सङ्कल्पादेरपि क्षणान्तरानुपलम्भादेव नावस्थायित्वं विशेषतो ऽन्योन्यविरोधेन सङ्कल्पान्तरोत्पत्तौ पूर्वसङ्कल्पनाशादित्यर्थः । समुद्रध्यानाद्यादिशब्दाभ्यामुपात्तं न तदित्यादिभाष्यं विकल्पस्थाय्याश्रयनिरासार्थत्वेन व्याख्यातुं विकल्पं तावदाह * अवस्थानं चेति * तत्राद्यनिरासार्थं न तदित्यादिभाष्यं व्याचष्टे * न तावदिति * गमनफलप्राप्तिलक्षणार्थत्वं गमेर्दर्शयितुं व्यापिन इत्युक्तम् । विभागविशिष्टसंयोगफलत्वाच्चलनस्यात्मनि विभागरहिते ऽनुपलब्धिरित्याशयः । सर्वत्रेति भाष्यं हेतुप्रश्नोत्तरत्वेनावतारयति * कथमिति * तद्व्याख्यातुमाह * अहम्प्रत्ययेन हीति * यथास्मिन्काले ऽहमस्मीति न विशि-

ध्यते तथास्मिन्देशे इत्यपीति मात्रशब्दव्यावर्त्त्यौ दर्शिते नन्वस्मिन्देशे वसाम्यहमित्यादिदेशतः कालतो वावच्छेद. प्रतीयतएवेत्याशङ्क्य चैतन्येत्युक्तम् प्रत्यक्षेण शरीरस्य देशकालवच्छेददर्शनाच्छरीराभेदोपचारेणासावहं प्रत्ययः परमार्थतः स्वात्मनश्चैतन्यस्वभावत्वेनातत्स्वभावाच्छरीराद्भेदाच्चैतन्यस्य च देशकालावच्छेदाप्रतीतेर्नात्मनऽवच्छेदो ऽस्तीत्याशयः। कथमेतावता सर्वव्यापितेत्याशङ्क्याह * ततश्चेति * नन्वहम्प्रत्ययस्यात्मग्राहकत्वात्तत्कार्यत्वव्यपदेशो न युक्त इत्याशङ्क्याह * सर्वत्रेति * ग्राहकत्ववत्कार्यत्वस्यापि सद्भावाद्यथेष्टं व्यपदेशोपपत्तिरित्याशयः।सुखादि वा कार्यशब्देनाभिमतमित्यन्यथा व्याचष्टे * सुखेति * सुखादेः सार्वत्रिकत्वमुपपादयति * न हीति * ननु शरीरएवसुखाद्युपलम्भात् कार्यत्वं भविष्यतीत्याशङ्क्याह * न चेति * सुखादयश्च स्वयमुपालभ्यन्ते न रूपादय इव शरीरगुणाः परेणापीति भाष्ये पठिते ऽपि शरीरे परेण प्रत्यक्षेणानुपलम्भादित्यनेन हेतुना सुखादेः शरीरधर्मता निषिद्धेत्यर्थः। कार्यस्य कारणासमानदेशत्वानियमात्समवायिकारणे कार्यसमवायात्कार्यशब्देनात्मधर्मत्वविवक्षा धर्मशब्देन सूचिता सार्वत्रिकसुखाद्युपलब्धेरात्मसार्वत्रिकत्वे हेतुतामुपपादयति * तत्रेति * शरीरात्मसंयोगहेतुकत्वात्सर्वस्यात्मकार्यस्य प्रादेशिकत्वे चात्मनस्तद्धदेशातिरिक्तदेशान्तरगमने ऽपि शरीरस्यात्मसंयोगायोगात्तद्वृत्तेत्युक्तम् नन्वित्याशङ्काभाष्यमवतारयति * शरीरमात्रेति * शरीरपरिमितात्मवाद्यार्हतः शरीरान्तर्गतात्मवाद्यौपनिषदः लिङ्गपदानुषङ्गः पूरणार्थः किमनेन हेतोर्दूषणमित्यपेक्षायामाह * अतश्चेति * आगमनस्यासर्वगतत्वाक्षेपकत्वादित्याशयः। ननु सर्वगते व्योम्नि सर्वत्रावकाशदानाख्यकार्योपलम्भदर्शनात्कथं विरुद्धतेति प्रश्नपूर्वकमुपपादयति * कुत इति * अयं भावः युगपत्सर्वत्र कार्योपलम्भो व्योमवत्सर्वगतत्वं साधयेन्न चासावात्मन्यस्ति पर्यायेण सर्वत्र कार्योपलम्भस्त्वसर्वगतेष्वेव दर्शनाद्विरुद्ध इति श्लोकं व्याचष्टे * यदि
हीति * सुखादेः शरीरात्मसंयोगहेतुकत्वेन वहिरसम्भवात्किञ्चि- ३७७।२
दन्यदित्युक्तं सुखादेरपि शरीरान्तरगतस्योपलम्भे युगपत्सर्वत्रात्मकार्योपलम्भः स्यान्न चासावस्तीति शरीरान्तरइत्यनेनोक्तं यदि गमनं विना कार्यक्रमो घटते ततः शरीरे ऽपि तथा स्यादित्यन्यथा हीत्यनेनोक्तं सक्रियत्वप्रसङ्ग इत्यनेन सर्वगतत्वसाध्यनिश्चलत्वविरोधित्वं हेतोरुक्तं निर्विशेषणस्तर्हि सर्वत्र कार्योपलम्भो हेतुर्भविष्यतीत्याशङ्क्याह * सन्देहे वेति * सम्प्रति साधनस्यानिर्णायकत्वात्साधा-

रणत्वं विशेषणं शरीरसंहितगमनात्सर्वत्र कार्योपपत्तेः पराभिमतत्वं वृद्धवाक्येनाह * आह चेति * शरीरेणैव सह गमनादिति वक्तव्ये श्लोकपूरणार्थमनुवादभूतः संशब्दप्रयोगः तदुपपादनाय संमिश्रत्वाभिधानं न हीति परिहारभाष्यमवतारयति * तत्रेति * नत्विति पूर्वभाष्यपाठे तु हिताशङ्कानिरासे तेन प्रतिज्ञातेन नोपपत्तिरुच्यते इति योज्यमित्याह * येषां त्विति * पूर्वपाठेतु न हीत्यखण्डं पदं शङ्कानिरासाक्षमत्वेनोत्तरभाष्यमाक्षिपति*कथं*पुनरिति श्लोकं व्याचष्टे * परेणापि हीति * पर्यायेण हि सर्वत्र कार्योपलम्भस्यासर्वगतेष्वेव दर्शनाद्विरुद्धत्वं निर्विशेषणस्य चानैकान्तिकत्वं यदुक्तं तन्निरासो ऽस्मान्नावगम्यतइत्याशयः। गमनाभावे सति सर्वत्रोपलभ्यमानकार्यत्वादित्येवं विधस्य हेतोर्व्योम्नि सद्भावेन विरुद्धत्वाभावाच्छरीरे वा वृत्तेरनैकान्तिकत्वाभावादपुष्टत्वं मत्वा गमनाभावोपपादनेनाशङ्कानिरासायैतद्भाष्यमिति परिहर्त्तुं परिसंख्यार्थत्वेनाशङ्कानिराससामर्थ्यमाह * तत्रेति * श्लोकं व्याचष्टे * परिसंख्यारूपेणेति * तद्वहुविरुद्धमित्यपेक्षायामाह*तदिति*अमूर्त्तस्य कार्त्स्न्योयोगेन क्षीरोदकवत् कृत्स्नसंयोगासम्भवात् शरीराख्यभूतमिश्रत्वासम्भवान्न भूतैः सहात्मनो गतिर्युक्तेत्युक्ते नन्वसर्वगतद्रव्यपरिमाणक्षणत्वामूर्त्तेरसर्वगतात्मवादिनं प्रत्यसिद्धममूर्त्तत्वमित्याशङ्क्य * स्वतस्तावदित्युक्तम् * मुक्तावस्थायां सर्वैः सर्वगतत्वाभ्युपगमात्संसारावस्थायां शरीरसंबन्धोपाधिकमेव मूर्त्तत्वं परैरिष्यते न चौपाधिकेन मूर्त्तत्वेनाकाशस्येव घटादिनास्य मिश्रत्वं सम्भवतीत्याशयः। श्लोकं व्याचष्टे * य-
३७८।१ देति * सूक्ष्मत्वेन कृत्स्नसंयोगासम्भवकारणं सर्वतो विसारित्वं सूचितं चन्द्रप्रकाशादेरप्यनियतपरिमाणत्वेन कथं चिदमूर्त्तत्वव्यपदेशोपपत्तेस्तद्वैषम्यायात्यन्तशब्दः दृष्टान्तत्वेन ज्ञानसन्तानोपादानं स्वतः शब्दाव्यावर्त्त्यं दर्शयितुम्*योऽपीत्युक्तम्*स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यश्च स्यान्नास्ति चावक्तव्यश्च स्यादस्ति च नास्ति चावक्तव्यश्चेति सप्तभङ्गिनयवाद्यार्हतःस्याद्वादी स्याच्छब्दस्याख्यातप्रतिरूपकाव्ययस्य कथं चिच्छब्दार्थवाचित्वाभ्युपगमादनैकान्तवादी बद्धानां संसारिणामात्मनां शरीरादत्यन्तव्यतिरेकाभावेन तन्मिश्रत्वान् मूर्त्तत्वं वदति अपिशब्दादौपनिषदो ऽपि यावत्संसारभाव्यणुपरिमाणलिङ्गशरीरमिश्रत्वान्मूर्त्तत्वं वदतीति सूचितं स्वस्वामिभावमात्रेण सम्बन्धस्योपपत्तेर्मिश्रत्वानाक्षेपकत्वादितरेतराश्रयाभिधानं नान्यस्य कदा चिदमूर्त्त-

त्वानवगमान्मूर्त्ततैव स्वाभाविकी भविष्यतीत्याशङ्क्य * मुक्तेत्युक्तम् * मुक्तावस्थायां मूर्त्तत्वे सति वाय्वाद्यभिघातदुःखापरिहार्य... । मुक्तित्वे ऽप्यर्थापत्तेरमूर्त्तत्वेन लक्षितस्य स्वभावानपायित्वात्संसाराद्यवस्थायामपि न स्वभावान्यता युक्तेत्याशयः। ननु मिश्रणसंसर्गापरपर्यायसम्पर्काभावे ऽपि शरीराश्रितत्वाद्द्रव्येनेव रथी शरीरेणात्मा नेष्यते इत्याशङ्क्यास्पर्शवत्त्वाच्चेत्युक्तम् । एकदेशसंयुक्तस्याकर्षणं दृष्टं न चास्पर्शस्यैकदेशेनापि संयोगः सम्भवतीत्याशयः। ननु माभूच्छरीरेणात्मनो नयनं वाय्वादिभिस्तु ज्वालादिवत्प्रेरणं भविष्यतीत्याशङ्क्याह *न हीति* परप्रेरितस्य गमनासम्भवे ऽभिहिते स्वतन्त्रस्य तर्हीच्छापूर्वकात्प्रयत्नाद् गमनं भविष्यतीत्याशङ्कानिराससूचनार्थम् *स्वतन्त्रइत्युक्तम्* शरीराद् बहिः कदा चिदिच्छया गमनादर्शनाच्छरीरगमनेनात्मगमनासिद्धेः शरीरगतावेव प्रयत्नो हेतुर्नात्मगतावित्याशयः। नन्वेवं सति देशान्तरादागमनस्यैवासम्भवात्सद्भावाभ्युपगमे बहुविरोधाभिधानमयुक्तमित्याशङ्क्याह * तेनेति * गमननिमित्तसार्वत्रिककार्याभ्युपगमे गमनासम्भवात्केवलस्य शरीरस्याचेतनत्वेन कार्याक्षमत्वात्सर्वकार्योच्छेदाभिप्रायं बहुविरोधाभिधानमित्याशयः। अस्मत्पक्षे गमनाभावे ऽपि तत्फललाभादविरोध इत्याह *सर्वासर्वगतत्वे त्विति* यथेत्यनेन सर्वत्रोपलभ्यमानकार्यत्वात्सर्वगतत्वे साध्ये व्योम्नो दृष्टान्तत्वं सूचितम्। गमनाक्षिप्तस्य वा सर्वगतत्वस्य बहुविरोधास्पदत्वाद् गमनस्य बहुविरोधास्पदत्वाभिधानमिति सूचयितुं सर्वगतपक्षो न कथं चित्सम्भवतीत्याह किं चेति * शरीरपरिमितपक्षे ऽपि बहिर्निर्गतस्य केशादेरात्माधिष्ठाननिरासायानिर्गत इत्युक्तं देहादनिर्गत इत्यनेन च श्यामाकतण्डुलवालाग्राङ्गुष्ठाणुमात्रपक्षात्सामान्यतो निर्द्दिश्याणुमात्रपक्षस्य बलीयस्त्वसूचनार्थं पुनर्विशेषतो निर्देशः। ननु बौद्धैर्ज्ञानसन्तानस्यात्मत्वाभ्युपगमात्तस्य चाद्रव्यत्वेनापरिमाणपक्षो ऽपि सम्भवात् कस्मान्न निरस्यतइत्याशङ्क्यात्मवादे तन्निरासादित्याह * ज्ञानेति * अणुमात्रपक्षे तावद्दोषानाह * तत्रेति * मध्यमपरिमाणत्वे घटादिवद्विनाशापत्तेः सर्वाभ्युपगतनित्यत्वाविरोधित्वे नाणुमात्रपक्षस्य बलीयस्त्वसूचनार्थम् * नित्यः सन्निरयुक्तम् * श्लोकं व्याचष्टे * यदा हीति* तन्मात्रेत्यनेन मात्रान्तरसञ्चारानभ्युपगमे सर्वमात्रस्थसुखाद्यसम्भव इति यथाश्रुतं व्याख्याय तदभ्युपगमे ऽपि युगपत्पदाध्याहारेण व्याख्यातुम् *ततश्चेत्युक्तम्* अथेत्यनेन गात्रान्तरसञ्चा- ३७९।

१ मुक्तिवैयर्थ्यापपत्तेरिति २ पु० पा०।

रात्सर्वत्रोपलम्भो लघुत्वाच्च सूक्ष्मकालभेदानुपलब्धिरिति शङ्कासञ्चरणप्रमाणाभावान्निपुणतो ऽपि लक्ष्यमाणे कालभेदानुपलम्भादतिसौक्ष्म्ये च वेदानां तदनुभवोत्पत्तिकालं यावदेकत्रानवस्थानेनैकगात्रे ऽप्युपलम्भापत्तेरुपन्यासपूर्वकं निरस्ता क्रमेण वाणुमात्रेषु शरीरावयवेषु सञ्चरतो ऽनन्तपरमाण्वारब्धे शरीरे बहुकालं पूर्वसम्बद्धपरमाणुवियोगापत्तेः पुष्ट्यादिशब्दोपात्तौ च वृद्धिशोषौ न स्यातामित्येवं पुष्ट्यादीत्यवयवं व्याख्यातुम् * शरीरेत्याद्युक्तम् * शरीरमात्रपक्षो ऽप्यनेकादृष्टकल्पनापत्तेरयुक्त इत्याह * अथेति * एतदेवोपपादयति * सद्भाव इति * श्लोकं व्याचष्टे * सर्वे हीति * यथा सकलप्रतीत्यप्रतीतिव्यतिरेकेण विकलप्रतीत्यभावाच्छब्दस्य सावयवत्वमार्हतोक्तं स्फोटवादे प्रत्याख्यातं शब्दाधिकरणे च द्रवत्वाभावेनावयवानामसंश्लेषो विश्लेषावश्यम्भावाच्च नित्यत्वं प्रत्याख्यातं तथात्मनो ऽपीत्यर्थः । अवयवेयत्तायामुपचयापचयतारतम्यायोगादवयवानन्त्यमार्हतोक्तं शरीरमात्रपक्षविरोधीत्यवधिशब्देनोक्तं संश्लेषाभावे को दोष इत्याशङ्क्य न चासंश्लिष्टानामित्युक्तं गात्रच्छेदे चेत्यनेन तत्सद्भावे चेति चकारेण सूचितमर्थं व्याख्यायार्हतोक्तप्रमाणनिरासार्थं *यत्त्वित्युक्तम्* आत्मनः सङ्कोचविकासोप-
३८०।१ पत्तावार्हतोक्तदृष्टान्तनिरासार्थम् * दीपप्रभेत्याद्युक्तम् * अतिशब्दं व्याख्यातुं कथं चिदित्युक्तं श्लोकद्वयोक्तातिरिक्ताप्यदृष्टकल्पनास्मिन्पक्षे स्यादित्याह * तेन चेति * सहसा जायते तच्च सहैव विनश्यतीत्यादिशब्देनोक्तमुपसंहरति * तस्मादिति * ननु सर्वगतत्वे सत्युपनिषत्सु श्यामाकतण्डुलादिपरिमाणं विरुध्येतेत्याशङ्क्याह * यत्त्विति * वालाग्रमात्रत्वाद्यादिशब्देनोक्तम् । वाक्यान्तरेत्यनेनौपचारिकत्वे ऽनन्यार्थविभुत्वश्रुतिविरोधो हेतुरुक्तः सावित्र्युपाख्याने ऽङ्गुष्ठमात्रत्वाभिधानमङ्गुष्ठपरिमाणे हृदये नीयमानत्वात्कथं चिच्छ्रुतिसामान्यमात्रेण वपादिवाक्यवद्व्याख्येयमित्याह * यदपीति * गौणार्थत्वोपपादनार्थं पतिव्रताप्रशंसापरमेतद्वाक्यमित्युक्ते ननु स्वमहिम्ना सावित्र्या पतिव्रतया मृत्योस्त्रातः पतिरित्येतावता पतिव्रतात्वप्रशंसासिद्धेरङ्गुष्ठमात्रत्वाभिधानं किमर्थमित्याशङ्क्य * काव्येत्युक्तम् * भारतस्येतिहासत्वे ऽप्यङ्गुष्ठमात्रत्वस्योत्प्रेक्षामात्रत्वसूचनार्थः काव्यशब्दः ।

अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथोत्प्रेक्षते यत्र तामुत्प्रेक्षां विदुर्बुधाः ॥

इत्यत्र लक्षणे उत्प्रेक्षाख्यकाव्यालङ्कारार्थे यमवशगम-

नं मृत्युरिति च विस्पष्टस्य प्रसिद्धस्य व्यवहारस्य प्रकर्षेण शंसनार्थं कीर्त्तनार्थमित्यर्थः । एतच्च द्वैपायनेनैव नित्यः सर्वगतः स्थाणुरचलो ऽयं सनातन इत्यादौ सर्वगतत्वाभिधानादवसीयतइत्याह * तथा हीति* नन्वेवं सत्येकेनैवात्मना सर्वशरीरादिष्वोपपत्तेः ते सर्वे स्वेन स्वेनात्मनोपलभ्यमानाः सन्त्येवेत्यात्मवादभाष्ये प्रतिशरीरात्मभेदाभिधानमयुक्तमित्याशङ्कते * ननु चेति * ऐकात्म्ये पशुमनुष्यादिभिन्नजातीयदेहोपभोग्यानां फलानाम् एकजातीयेन देहेन भोगासम्भवे ऽप्येकजातीयदेहोपभोग्यानां फलानामेकेन देहेनोपभोगसम्भवादनेकशरीरवैयर्थ्यापत्तेः सुखदुःखादिव्यवस्थानुपपत्तेरेकशरीरस्थेन चात्मना दृष्टार्थे शरीरान्तरस्थस्यात्मनः प्रत्यभिज्ञापत्तेर्भेद एव युक्त इति परिहरति * नैष दोष इति * आद्यं हेतुं व्याचष्टे * इतरथा हीति * ननु यथापूर्वकृतकर्मफलोपभागायोपात्ते देहे तदुपभोगात्रष्टे कर्मान्तरफलोपभोगार्थं देहान्तरार्थवत्त्वं तथैकस्मिन्नपि जन्मनि यत्कर्मफलोपभोगार्थं यो देहो ऽर्जितस्तेन कर्मान्तरफलोपभोगस्याशक्यत्वात्तदर्थं देहान्तरार्थवत्त्वं भविष्यतीत्याशङ्कते * जन्मान्तरेति * परिहरति * नेति * यावन्ति कर्माणि फलदानाय प्रवृत्तानि तावद्भिरुपात्तेनैकेनैव देहेन सर्वफलोपभोगसिद्धेर्देहान्तरानर्थक्यं जन्मान्तरे तु पूर्वदेहनाशाद्देहान्तरार्थवत्तेत्यर्थः । द्वितीयं हेतुं व्याचष्टे * सर्वेति प्रतिशरीरं चेति * चकारसूचितानि हेत्वन्तराण्याह * अन्यदीयैश्चेति * प्रत्यभिज्ञापत्तिरप्यनेन सूचिता वसन्ते ब्राह्मणो ऽग्नीनादधीत ग्रीष्मे राजन्य इत्यादिवर्णविशेषव्यवस्थया यः कर्मचोदनानां व्यवस्थाख्यो भेदः स न स्यादित्युक्तम् । ननु ब्राह्मणत्वादेर्देहाश्रितत्वेनात्मैक्ये ऽपि देहभेदाद्व्यवस्थोपपद्यते इत्याशङ्क्य * एकस्यैवेत्युक्तम् * चेतनप्रवर्त्तकत्वाच्चोदनानामात्मनो ऽपि च देहसम्बन्धोपाधिकब्राह्मणत्वाद्यभिमानेन ब्राह्मणत्वादिव्यपदेशोपपत्तेः सर्वदेहष्वैक्ये सति व्यवस्थानुपपत्तिरिति भावः । नानात्वे तु नैते दोषाः सन्तीत्याह * आत्मेति * ननु नानात्वे सति सर्वगतत्वाभ्युपमात्सर्वेषामेकदेशत्वं स्यात् तच्च द्रव्याणां भिन्नदेशवृत्तित्वनियमाद्विरुद्धमित्याशङ्क्याह * सर्वेषामिति * मूर्त्तत्वप्रयुक्तो ऽसौ नियमो न द्रव्यप्रयुक्त इति भावः । ननु यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैको ऽनुगच्छन्नुपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजो ऽयमात्मेत्याद्युपनिषत्स्वैकात्म्यव्यवहारो नानात्वे विरुध्येतेत्याशङ्क्याह * तदपेक्षयैव चेति * समानदेशवृत्तिस्तच्छब्देन परामृष्टा चैतन्यं

बोधरूपत्वमात्ममहङ्कारास्पदत्वं सुखाद्याश्रयतादिशब्देनोक्ता रागद्वे-
षनिवृत्तये स चौपचारिको व्यवहार इत्याशयः । ननु नानात्वे ऽपि
सर्वगतत्वाभ्युपगमेन सर्वदेहसम्बन्धात्सुखाद्युपलब्धिव्यवस्था न
स्यादित्याशङ्कते * कथं पुनरिति * देहान्तरगतस्य सुखादेः स्व-
समवायाभावान्नोपलम्भापत्तिरित्याशङ्क्य * अन्यदीयेत्युक्तम् *
स्वासमवेतस्यापि देहादेरुपलम्भात्समानदेशत्वमात्रमुपलम्भहेतुरि-
त्याशयः । परपक्षसाम्यापत्त्यान्येषां परिहारं दूषयितुमुपन्यस्यति
* केचित्तावदिति * गर्भस्य मातुश्च यावात्मानौ तद्वर्त्तिनामिति
समासार्थः। श्लोकं व्याचष्टे *शरीरेति* स्वसमवेतस्यैव दुःखादेरुप-
लब्धिरिति परिहारसाम्यमभिप्रेत्य* तत्रेत्युक्तम्* स्वासमवेतस्यापि
देहादेरुपलम्भदर्शनादेनं परिहारं दूषयति * स्यादिति * अत्र
सुखाद्युपलम्भव्यवस्थायामित्यर्थः । ननूभयपक्षतुल्यस्य दोषस्यैकं प्रत्यु-
द्भावनायोगाददोषो भविष्यतीत्याशङ्क्याह * न त्विति * न च
साम्यमस्तीत्याह *अपि चेति * स्वकर्मोपात्तस्यैव सुखादेर्भोग-
योग्यत्वाद्व्यवस्थेति स्वमतेन परिहरति * तस्मादिति * श्लोकं
व्याचष्टे * यदि हीति * न त्वन्यस्यात्मनो ऽन्यदीये देहे भावात्
त्वत्कृतयोरपि धर्माधर्मयोरात्मीयत्वापत्तेरव्यवस्था स्यादित्याशङ्कां
३८२।२ निरस्यन्नुपसंहरति * तस्मादिति * तत्कर्मोपार्जितैस्त्वेतैः क्रिय-
माणेषु कर्मसु कर्तृता यजमानानामृत्विक्परशुकर्मवदित्यात्मवादो-
क्तन्यायवार्त्तिकाद् शरीरात्मनोः स्वस्वामिभावव्यवस्थानाद्व्यवस्थे-
त्यर्थः । सर्वगतत्वसाधनस्य प्रकृतोपयोगमाह * एवमिति * एव-
मात्मसमवेतस्य कर्मणो ऽत्रस्थानमित्याद्यकल्पनिरासार्थं नेत्यादि-
भाष्यं व्याख्याय प्रदेयद्रव्यसमवेतस्यावस्थानमिति द्वितीयकल्पनि-
रासार्थं यत्रेति भाष्यं व्याचष्टे * अथेति * आश्रयो ऽपीति भाष्यं
व्याचष्टे * न चेति * सत्यपीत्यादिभाष्येण द्व्यवदानस्यैवावस्था-
विशेषत्वाद्भस्मनो ऽप्यवदानविरोधित्वमाशङ्क्य भस्मावस्थायां द्व्य-
वदानरूपाप्रत्यभिज्ञानात् भस्मनस्तदवस्थात्वायोगाद्विरोधितोच्यतइ-
ति तद्विपरीतशब्देन सूचितम्।नन्वदृश्यमानमपि द्व्यवदानं कालान्त-
रभाविफलसिद्ध्यन्यथानुपपत्त्यावधारितस्थायित्वस्य कर्मणो निराश्र-
यस्यानुपपत्तेराश्रयत्वेनानुमास्यतइत्याशङ्क्यादर्शनहेत्वभावाद्योग्यानु-
पलब्धिविरोधेनानुमानासम्भवाभिधानार्थं फलक्रियेत्यादिभाष्यं
व्याचष्टे *न चास्येति* सौक्ष्म्यादीनामित्याशङ्काभाष्यं व्याचष्टे *अर्था-
पत्त्येति* कल्पितमिति परिहारार्थं भाष्यं निश्चितानभिधानादयुक्तमा-
शङ्क्य मृदूक्त्या परपक्षे ऽप्यतिगौरवाभिधानार्थत्वेन व्याचष्टे *

तथा सतीति * ननु स्वतन्त्रस्यैव कर्मणः स्थितिर्भविष्यतीत्याशङ्का-
निरासार्थमनाश्रितमिति भाष्यं व्याचष्टे * एवमिति * क्षणिकत्वे-
नान्यत्रावगतस्य कर्मणो ऽत्र स्थितिरनुपलब्धिकारणं च स्वातन्त्र्या-
दिकं कल्प्यमित्यतिगौरवमेवंशब्देन वदता तादृशशब्दस्यायुक्तार्थत्वं
सूचितम्। देशान्तरप्रापणस्वभावत्वेनान्यत्रावगतस्य कर्मण औदासी-
न्यस्वभावकल्पने ऽप्यतिगौरवाभिधानार्थं स्वभावान्तरेति भाष्यं
आद्यकल्पविषयत्वेन व्याचष्टे * अथेति * तस्मादित्युपसंहारभा-
ष्यं व्याचष्टे * तस्मादिति * एवकारेण स्थायित्वकल्पनस्यायुक्त-
त्वाभिधानाद्भङ्गीत्यवयवो व्याख्यातः । प्रयोजनभाष्ये चिन्ता-
शब्दं तावद्व्याचष्टे * मूलेति * अनन्तरसूत्राभिहिता पूर्वसद्भावप्र-
योजनत्वशङ्का निवृत्त्यर्थत्वे चिन्ताशब्दस्याधिकरणशब्देनोक्ते ननु
द्रव्यगुणशब्दा अपीत्यपिशब्दात्प्रतिपदाधिकरणप्रयोजनमेतदित्यभावे
तत्रैकस्मादपूर्वमित्येतावन्मात्रस्य सिद्धान्तार्थत्वेन द्रव्यादेरपूर्वार्थ-
त्वोपपत्तेः प्रतिनिधिर्न युक्त इत्याशङ्क्य मूलशब्देन प्राधान्याद्भावा-
र्थाधिकरणमुक्तम्। एवंशब्दार्थे ऽपि शब्द इत्यर्थः। प्रयोजनमुपपादयति
* द्रव्यादीनामिति * न देवताग्निशब्दक्रियमन्यार्थसंयोगादिति
षष्ठाधिकरणे कर्मणामदृष्टार्थत्वात्तस्य प्रतिनिधिना सिद्धौ प्रमाणा-
भावात्प्रतिनिध्यभावो वक्ष्यतइत्यर्थः । ननु प्रक्रान्तापरिसमाप्तिनि-
मित्तदोषपरिहारार्थं कर्मणो ऽवश्यं समापनाय द्रव्यान्तरस्यावश्यो-
पादेयत्वात् पूर्वपक्षप्रयोजनं न युक्तमित्याशङ्कते * कथं तर्हीति *
द्रव्यान्तरोपादाने सदृशानादरः पूर्वपक्षप्रयोजनमिति परिहरति
* समापनीयमेवेति * ननु पूर्वपक्षे ऽप्याश्रयत्वेन कर्मणो ऽन्वया-
त्तत्सिद्ध्यै सदृशादरो भविष्यतीत्याशङ्क्य कर्मणश्चेत्युक्तम्। नन्वेवमपि
प्रतिनिधिरुपात्तः स्यादित्याशङ्क्याह * न चेति * अन्यार्थत्वमुपपा-
दयति * पूर्वद्रव्यमिति * प्रक्रान्ता समाप्तिनिमित्तो दोषः प्रत्य-
वायशब्देनोक्तः। काम्यवन्नैमित्तिकस्यापि कर्मणः प्रतिनिधिना समा-
पनं प्रक्रान्तासमापनदोषपरिहारमात्रार्थं न फलसिद्ध्यर्थमिति शङ्का-
निरासार्थम् * नैमित्तिकेत्युक्तम् * प्रतिनिधिना ऽप्यनुष्ठितं नै- ३८३।१
मित्तिकं कर्माकरणनिमित्तप्रत्यवायपरिहाराख्यं फलं साधयतीत्या-
शयः । धातोश्च फलभावनाकरणवाचित्वे श्येनादिशब्दानां तत्सा-
मानाधिकरण्यान्नामधेयतापि सिद्धान्तप्रयोजनमित्याह * नामधेये-
ति * कस्मात्तर्हि भाष्यकृता ऽसौ नोक्तेत्याशङ्क्याह * सेति *
स्थितएतस्मिन्नधिकरणइत्यत्रोक्तत्वादित्यर्थः । गुणविधित्वे त्वनुष्ठे-
यार्थमत्वन्नाध्येयत्वे तदभावादनुष्ठानोपयोगित्वेन प्रयोजनत्वोपपत्तिः।

॥ अथ कर्मणां गुणप्रधानभावविभागाधिकरणम् ॥ ३ ॥

## तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

अवगतमेतदित्यादिभाष्येण भावशब्दानामपूर्वगमकत्वोक्त्या तदेतरत्तदर्थमिति न्यायान्नामशब्दार्थस्य भावशब्दार्थं कर्मप्रत्यङ्गत्वावगतेः कर्मणां नामार्थं प्रति प्राधान्याभिधानात्प्रधानकर्मवाचित्वस्यार्थादुक्तस्यापवादायेदमधिकरणं युक्तं तत्र गुणप्रधानचिन्ताया भेदलक्षणासङ्गतिमाशङ्क्योपक्रमोक्तामेव सङ्गतिं स्मारयत्येवमिति द्रव्यं प्रति कर्मणो गुणत्वे दृष्टार्थत्वात् कर्मभेदे ऽप्यपूर्वभेदो नास्तीत्याशयः । विवेकशब्देन च न किं चिद् गुणकर्मास्तीत्याशङ्क्य गुणकर्मव्युत्पादनार्थता ऽस्याधिकरणस्य सूचिता भावार्थत्वेति पूर्वपक्षभाष्यं व्याचष्टे * तत्रेति * आद्यपादेनावहन्त्यादेरपि यज्यादिवद्धात्वाद्याकाङ्क्षोत्थापनहेतुभावनावाच्याख्यातप्रत्यययोगेन भावार्थत्वात्प्रसक्तिलक्षणया श्रुत्या तदर्थस्य भावनया भाव्यसाधनत्वेन ग्रहणात्प्राधान्यमित्येवमाश्रितत्वात् प्रयोगस्येति सूत्रावयवोक्तश्रुतिकृतधात्वर्थप्राधान्याभिधानार्थत्वेनै भाष्यं व्याख्याय भाव्यत इति व्युत्पत्त्या भावशब्देन साध्याभिधानात्साध्यार्थत्वाविशेषादित्येवं भूतभव्यसमुच्चारणन्यायार्थतया द्वितीयेन व्याख्याते ननु व्रीह्यादेर्नामार्थस्य द्वितीयया भाव्यत्वेनान्वयान्नेह भूतभव्यसमुच्चारणन्यायो ऽस्तीत्याशङ्क्य भवनकर्तृभावनावाचित्वरूपभावार्थत्वाविशेषात्सिद्धे व्रीह्यादौ भावनां प्रति भाव्यत्वमशक्यं द्वितीयया वक्तुमित्येवं तृतीयेन व्याख्यातम् । प्रधानभूतकर्मवाचिताख्यातस्य प्राधान्योक्त्योक्ता । ननु व्रीह्यादेर्भाव्यत्वानभ्युपगमे तृतीयानिर्देशाभावे च साधनत्वस्याप्ययोगादनन्वयः स्यादित्याशङ्क्य धात्वर्थस्य प्रधानत्वेनाङ्गापेक्षत्वात्फलवत्सन्निधावफलं तदङ्गमिति न्यायेनापूर्वप्रयुक्तत्वाद्धर्माणां धात्वर्थस्य चापूर्वसाधनत्वाद् तृतीयानिर्दिष्टस्यापि व्रीह्यादेर्धात्वर्थसाधनतावसीयतइति सूचयितुमाह * यावद्धीति * न्याय्यशब्देन धात्वर्थफलवत्त्वस्य पूर्वाधिकरणन्यायसिद्धतोक्ता यथा यज्यादीनामर्थो व्रीह्यादिभिर्निष्पाद्यस्तथा ऽवहत्यादीनामपीति वदता सक्तुवत् द्वितीयाभङ्गः सूचितः । प्रधानकर्मत्वपूर्वपक्षस्यापूर्वभेदोपयोगित्वमाह * अत श्चेति * ततो ब्रूम इत्यादिसिद्धान्तभाष्यं तात्पर्यतो व्याचष्टे * अत्रेति * यद्यपि द्रव्यस्य चाख्यातपदार्थस्य चान्वये धात्वर्थस्याख्यातपदश्रुत्या फलवत्त्वावगमाद्भूतभव्यसमुच्चारणन्यायाच्च सर्वत्र धात्वर्थनिष्पादकत्वं द्रव्यस्यावसीयते तथापि द्रव्यनिष्पादितस्य

धात्वर्थस्य कैमर्थ्यापेक्षायामक्लृप्तप्रयोजनस्यैव यागादेरदृष्टापूर्वसाधनत्वं युक्तमवघातादेस्तत्कृतेनैव द्रव्योपकारेण नैराकाङ्क्ष्येणाप्रामाणिकत्वाद्यादृष्टार्थता युक्तेत्यर्थः । अनेन च सर्वेभ्य इति भाष्योक्तगुणकर्मत्वव्युत्पादनस्य अपूर्वभेदापवादार्थत्वं विवृतम् । श्लोकं व्याचष्टे * सर्वत्रैवेति * अनेन चाख्यातत्वाविशेषणभूतैर्भाव्यार्थजन्मन इतिद्वयमपि प्रागवस्थायामभ्युपगमेन परिहृतं व्रीह्यादेर्द्रव्यस्य सिद्धत्वात् स्वरूपेण भाव्यत्वायोगे ऽप्यसिद्धेन तण्डुलीभावादिरूपेण साध्यत्वसम्भवात् सिद्धे च साध्यत्वाशक्तेरित्येतत्परिहृतं भवतीति
सूचनायोपकरोतीत्युक्तम् । ३८४।१

॥ प्रधानकर्मलक्षणम् ॥

यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥

यद्यपि यदक्लृप्तप्रयोजनं तस्यैवापूर्वसाधनत्वं युक्तं न सर्वस्य तथापि किमक्लृप्तप्रयोजनमिति व्यवस्थाहेत्वभावाद्विधिबलात् सर्वेषामपूर्वसाधनतावश्यमापद्येतेत्याशङ्क्य तद्विवेकार्थत्वं गुणप्रधानलक्षणस्यैवं सतीति भाष्योक्तमध्यायोपक्रमएवास्य च विवेकार्थं यद्गुणप्रधानलक्षणमिति वार्त्तिकेन विवृतत्वाद्व्याख्यानार्थं यैरिति भाष्यं व्याचष्टे * यैरिति * यद्यप्याख्यातानां भावशब्दत्वेनाभिप्रेतानां पूर्वनिर्दिष्टानां तानि द्वैधमिति तच्छब्देन परामर्शात्तद्वाच्यानां कर्मणां गुणप्रधानद्वारा तेषां गुणप्रधानवाचितोक्तेति यद्भावशब्दवाच्यैर्यैः कर्मभिर्न द्रव्यमुपक्रियते तेषां कर्मणां प्रधानत्वात्तद्वाचीनि भावशब्दाख्यान्याख्यातानि प्रधानकर्मवाचीनीति व्याचक्षाणेन भाष्यकृतोक्तम् । तथा व्याख्यातार्थस्यापि बुद्धिस्थत्वात्तच्छब्देन परामर्शोपपत्तेः क्लिष्टव्याख्या न युक्तेति मत्वा भाष्यस्थं भावशब्दमुपेक्ष्य कर्मभिरित्येतावन्मात्रमुक्तं संस्कर्त्तुमित्यस्य सूत्रोक्तं च प्रातिविकारार्थत्वं च दर्शयितुं* धर्म तो वेत्युक्तम् * प्रधानत्वाभिधानस्यापूर्वभेदोपयोगित्वमदृष्टार्थानीत्यनेनोक्तम् ।

॥ गुणकर्मलक्षणम् ॥

यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥

सूत्रं व्याचष्टे * यैः पुनरिति * अग्निमादधीतेत्यग्निशब्दस्य भाव्यत्वार्हकर्माङ्गभूताहवनीयादिरूपवाचित्वात्तस्य च यूपादिवत् शास्त्रीयकर्मोत्पाद्यत्वाद्यथाधानेनाग्नयइत्युक्तं स्वमतेनर्त्विजां प्राप्यत्वाद्भाष्यकृन्मतेन चोत्पाद्यत्वादवाप्यन्ते क्रियन्ते वेत्युक्तम् । वैतुल्यादिलक्षणं विकारमेव पुरोडाशोत्पादनयोग्यत्वाधानार्थत्वात् संस्कारत्वेनाभिप्रेत्य संस्क्रियन्ते वेत्युक्तम् । द्रव्यप्राधान्योपपादनार्थः प्रयोजनवच्छब्दः सूत्रद्वयोक्तव्यवस्थाहेतूपसंहारार्थं प्रत्यक्षमित्यादिभाष्यं स्पष्टत्वान्न व्याख्यातं गुणप्रधानविचारस्यापूर्वसदसद्भावविवेकप्रयोजनतया न सर्वेभ्यः शक्यमपूर्वं कल्पयितुमिति भाष्यात् कुतो ऽपूर्वमित्यस्माच्च ज्ञातत्वेन प्रयोजनान्तरानपेक्षत्वात्प्रतिपादकं प्रयोजनमिति भाष्यमयुक्तमाशङ्क्योपपादयति * यदेति * यथैव भावार्थाधिकरणस्य लक्षणसङ्गत्यै धात्वर्थभेदानुनिष्पाद्यपूर्वभेदानुसारसिद्धिप्रयोजनत्वे ऽन्यदुपोद्घातेनेत्युपोद्घातशब्देनोक्ते ऽप्यनुष्ठानार्थत्वाच्चिन्तायास्तदुपयोगिप्रयोजनान्तराभिधानं तथेहापीत्याशयः । पूर्वपक्षप्रयोजनभाष्यं प्रैयङ्गवे चरौ व्रीह्यनुपदेशादयुक्तमाशङ्क्य व्याचष्टे * तदुच्यतइति * नन्वतिदेशप्राप्तानामपि व्रीहीणां प्रियङ्गुभिर्बाधात् कथमुत्पाद्यतइति प्रश्नपूर्वकमुपपादयति * कुत इति * प्रयाजेज्याङ्गभूतमाज्यं यथा प्रधानाङ्गतया श्रुतेन प्रियङ्गुद्रव्येण न बाध्यते तथा ऽवघाताङ्गभूता व्रीहयो ऽपीत्यर्थः । नन्वेवं सति सिद्धान्ते ऽप्युत्पाद्या इत्याशङ्क्याह * सिद्धान्ते त्विति * एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * व्रीहिस्वरूपानादरेणापूर्वसाधनांशनिवेशं संस्काराणां वक्तुं प्रधानौपयिकशब्दः । नन्ववघातस्य निर्वापोत्तरकालं विधानात्तथावनिरुप्तानामेवावघातोपपत्तेर्व्रीह्यन्तरोत्पादनानाक्षेपात्तेषां च यागप्रयुक्त्यैव लाभेनावघातस्याप्रयोजकत्वान्नेह पूर्वपक्षे ऽपि व्रीहिप्राप्तिरित्याशङ्कते * ननु चेति * सत्यं पदप्रयुक्तोपजीवित्वेनाप्रयोजकत्वं भवति गुणाधिकारे गुणफलसम्बन्धविधिपरस्प शास्त्रस्य वाच्यभेदापत्तेराश्रयाश्रयिसम्बन्धपरत्वायोगान्निराश्रयस्यच गुणस्य फलसाधनत्वानुपपत्तेराश्रयाक्षेपकशास्त्रान्तरापेक्षत्वाद्भवति वाजिनेज्यादौ च शास्त्रस्य नैरपेक्ष्ये ऽपि वाजिनादेः प्रयुक्त्यशक्तेरिह त्ववघातशास्त्रस्य यागशास्त्रानपेक्षत्वादवघातस्य च प्रयुक्तिशक्त्यविघातान्नान्यप्रयुक्तोपजीवने हेतुरस्तीत्याशयेन परिहरति * नैतदिति * तुल्यशब्देनान्यो-
३८५।२ न्यानपेक्षतोक्ता । श्लोकं व्याचष्टे * व्रीहिभिरिति * यागार्थव्रीहिनियमाभावं वक्ष्यमाणमभिप्रेत्य विशेषहेत्वभावोक्तिः । न च यथा सा

वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति शास्त्रयोरन्योन्यानपेक्षत्वे ऽपि तप्ते पयसि दध्यानयतीत्यानयतेर्द्विकर्मकत्वात्पयसश्चाधिकरणत्वेनाद्यदध्याख्यकर्मव्याप्यतया द्वितीयकर्मत्वात्समाप्तिः। शब्दार्थे इतिन्यायेनागारे गावो वास्यन्तामित्यगारस्येव गोवासनं प्रति दध्यानयनं प्रति प्राधान्यावसायादामिक्षायाश्च पयोरसप्रत्यभिज्ञानेन पयो ऽवस्थाविशेषमात्रत्वेन ततो ऽर्थान्तरत्वाभावादामिक्षार्थत्वेन दध्यानयनस्य तत्प्रयुक्तत्वावगतेरामिक्षानुनिष्पादित्वे दध्यानयनान्निष्पत्तिरस्ति न वाजिनस्यामिक्षाप्रयुक्तादपि दध्यानयनान्निष्पत्तिसिद्धेर्दध्यानयनस्य च वाजिनार्थत्वेन प्रमाणाभावान्न दध्यानयनं प्रति वाजिनस्य प्रयोजकत्वे ऽर्थापत्तिः प्रभवति। तथावघातस्य यागानुनिष्पादित्वाभावाद्यागवच्च,तस्यापि,पूर्वपक्षे व्रीहीन्प्रति प्राधान्याविशेषान्न च यथा च सप्तमं पदमध्वर्युरञ्जलिना गृह्णातीति सप्तमपदपांसुग्रहणकर्म्मणो ऽनुनिष्पादित्वाभावे ऽपि क्रयवच्च नयनस्य स्ववाक्याश्रुतेः। सन्निधानात्स्वदूपदान्यनुनिष्क्रामतीति विहितनयनसाध्यत्वाविशेषे ऽपि नयनस्य प्रकृतैकहायनीसंस्कारार्थत्वेन तद्द्वारा क्रयार्थत्वावसायात्तत्प्रयुक्तत्वावगतेस्तत्प्रयुक्तनयनस्य लाभेनैव पदपांसुग्रहणकर्मणो ऽपि नैराकाङ्क्ष्यात्प्रयोजकत्वाभावस्तथावघातस्य यागार्थैर्व्रीहिभिर्नैराकाङ्क्ष्यस्ववाक्यश्रुतव्रीहिसंयोगेन वाक्यान्तरस्थव्रीह्यनपेक्षत्वादेकदेशद्रव्यत्वं चाप्रयोजकत्वकारणं तदुपलक्षितं च निनयनादिवत्प्रतिपत्तित्वमनाशङ्क्यमेव उत्तरार्द्धादादिरादानमिति भावव्युत्पत्त्यादिशब्देनावदानमुक्तम्। ननु निर्वापोत्तरकालमवघातविधानाद्यागार्थे निरुप्तानामेव व्रीहीणामवघातसाधनत्वावगतेर्यथा पुरोडाशार्थकपालसाधनत्वात्तुषोपवापस्य कपालं प्रत्यप्रयोजकत्वं तथावघातस्यापि यागार्थव्रीहिसाध्यत्वाद् व्रीहीन्प्रत्यप्रयोजकत्वं भविष्यतीत्यभिप्रायेणाप्रयोजकत्वं चोद्यमिति सूचयितुं पदकर्मानन्तरमर्थाभिधानकर्मोदाहार्यमपि चरममुदाहृतम्। यागव्रीहीनवहन्तीत्यन्यार्थत्वेनाभिधानाभावान्न तुषोपवापतुल्यतेत्यर्थः। श्लोकार्थमुपसंहरति *तस्मादिति* ननु यागार्थत्वाभिधानाभावे ऽप्युपादानगौरवपरिहाराय यागार्थानामेव व्रीहीणामवघातसाधनत्वावगतेरन्यार्थत्वाभिधानफललाभादप्रयोजकत्वं भविष्यतीत्याशङ्क्याह *न चास्मिन्निति* निर्वापस्यापि पूर्वपक्षे यागार्थव्रीहिविषयत्वे प्रमाणाभावान्निर्वापावशिष्टानामपि च व्रीहीणां सन्निधेरुपादानगौरवाभावान्न यागार्थव्रीहिनियमः सम्भवतीत्याशयः। नन्वाग्नेय्याग्नीध्रमुपतिष्ठतइतिवद्प्रकृतोपादाने प्रकृतक्रत्वन्वयलक्षणसामान्यसम्बन्धस्यापि कल्प्यत्वाद्गौरवापत्ते-

स्तत्परिहारार्थं प्रकृतानामेव व्रीहीणां ग्रहणं युक्तमित्याशङ्क्याह * न चात्रेति * विशेषाश्रुतेरिमे व्रीहयः क्लृप्तसामान्यसम्बन्धा नेमइति विशेषाज्ञानादाग्नेयीन्यायानुपपत्तेः। प्रकरणस्यैव विशेषकत्वं वाच्यं न च तत्सम्भवति विनियोगमात्रे तस्य व्यापारादित्याशयः । ननु विनियोगे प्रमाणभूतस्येतिकर्त्तव्यताकाङ्क्षालक्षणस्य प्रकरणस्याविशेषकत्वे ऽपि सान्निध्यपरपर्यायाधिकारलक्षणस्य प्रकरणस्य सप्तमपदपांसुग्रहणादौ प्रकृतैकहायन्यादिसम्बन्धित्वाभ्युपगमेन दर्शनात्तद्वशेन विशेषो भविष्यतीत्याशङ्क्याह * न चेति * यदवदघातव्रीहीणां साकाङ्क्षात्वाभावान्नैराकाङ्क्ष्ये चाधिकारस्य नवमाधिकरणसूत्रे विशेषकत्वनिरासान्नात्र प्रकृतग्रहणे प्रमाणमित्यर्थः। सिद्धान्ते तर्हि कथं प्रकृतग्रहणमित्याशङ्क्याह * संस्कारेति * आनर्थक्यपरिहारायापूर्वसाधनविशेषाकाङ्क्षायामधिकाराद्विशेषलाभो युक्त इत्याशयः । तत्रापि व्रीह्यादिशब्दस्यापूर्वसाधनत्वानभिधायित्वात् स्ववाच्यलक्षितकर्मलक्षितापूर्वसाधनत्वस्य लक्षणापरम्परयावगतेः क्लेशाभिधानं पूर्वपक्षे तु नासौ न्यायो ऽस्तीत्याह * न चेति * तथोक्तं प्रयोजनमुपपाद्य स्वयं प्रयोजनान्तराण्याह * धर्मेति * यथौन्दुवरमुलूखलं सर्वौषधस्य पूरयित्वावहन्त्यथैनमुपदधातीत्यवघातस्य तण्डुलसाध्यपुरोडाशादिप्रयोजनाभावात्तण्डुलनिवृत्त्यर्थत्वाभावेनादृष्टार्थत्वात् सकृदनुष्ठानं धर्ममात्रे त्वदर्शनात् शब्दार्थेनापवर्गः स्यादित्येकादशाधिकरणे वक्ष्यते तथात्रापि पूर्वपक्षे स्यादित्येवं प्रयोजनं यागव्रीहीणां चावघातनियमाभावो द्वितीयम्।सान्नाय्योपांशुयाजाङ्गत्वाविशेषात्तद्विकारेष्वपि प्रयोगस्तृतीयम् । आदिशब्दाद्यवपक्षे ऽपि व्रीहीणामेवावघातस्त्रयाणामेव चेति प्रयोजनद्वयम् ।

॥ अथ संमार्जनादीनामप्रधानताधिकरणम् ॥ ४ ॥

## धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥

उदाहरणबहुत्वस्य प्रयोजनमाह * स्रुगिति * संमार्गपर्यग्निकरणसमुदायभूम्ना संमार्गशब्दः । अग्निजुहोद्धर्चवदानद्वारप्रधानान्वयतुल्यत्वे ऽपि स्रुगन्तरविषयो विप्रकर्षो ऽभिमतः। द्व्यवदानस्याग्निसम्बन्धापादनद्वारा च प्रधानसाधनत्वात् जुह्वा अप्यन्यपेक्षया विप्रकर्षः सम्भवति। उपभृतः प्रयाजानुयाजार्थाज्याधारत्वे ऽपि प्रधानहविराधारत्वाभावात् ध्रुवायाश्चोपांशुयाजार्थाज्याधारत्वे ऽप्यसाधारण्याभावात्प्रधानकालविप्रकर्षाच्च प्रधानाविप्रकर्षः । प-

१ म्नात्रार्थेनेति २ पु० पा० ।

रिधीनां जुहूतुल्याग्निपरिधानार्थत्वे ऽपि प्रक्षिप्यमाणहविर्बहिःपत-
नप्रतिबन्धकत्वेन प्रधानकालोपयोगित्वात् हविरग्न्यन्वयान्तरितप्र-
धानकालजुह्वपेक्षया प्रधानप्रत्यासत्तिः स्रुगन्तरापेक्षया तु स्पष्टैव
पुरोडाशस्य त्याज्यत्वात् त्याज्यद्व्यवदानसमवायित्वाद्वान्यतः प्रत्या-
सत्तिः। ननु प्रत्यासत्तिविशेषसूचनस्य किं प्रयोजनमित्याशङ्क्य प्राति-
लोम्येन सिद्धान्तोपयोगमाह * एतदिति * किं तावत्प्राप्तमित्या-
दिपूर्वपक्षभाष्यमुपकारलक्षणशेषत्वाभावेन तदभावमात्रस्य प्रधान-
कर्मत्वानापादकत्वादयुक्तमाशङ्क्योपपादयति * तत्रेति * यद्यप्यु- ३८६।१
पकारलक्षणशेषत्वाभावात् कुतो ऽपूर्वं कुतो नेति भाष्याच्चादृष्टार्थ-
कर्मलक्षणमिदं न प्रधानलक्षणमिति वस्तुतो ऽवसीयते तथापि
यथाश्रुतात् सूत्रात्प्रधानकर्मलक्षणं मत्वा पूर्वपक्ष इत्यर्थः। अनेन च
प्रधानकर्मलक्षणापवादार्थतास्याधिकरणस्योक्ता एवं चापवादत्वेन
सङ्गतिसिद्ध्यर्थमेव तान्यदृष्टार्थानीति वक्तव्ये तानि प्रधानभूतानीत्य-
भिधानात् सूत्रानुपालम्भः। सिद्धान्ते वा संमार्गादेरप्यदृष्टद्रव्योपका-
रजनकत्वाभ्युपगमाद्यथाश्रुतमपि लक्षणसूत्रद्वयमविरुद्धं तदा त्वे-
तदधिकरणस्य गुणकर्मत्वाभिधानप्रयोजनापूर्वाभावापवादाद् गुण-
कर्मलक्षणस्यैवापवादार्थत्वम्। उत्तरेण तु गुणकर्मस्यैवापवदिष्यते अत
एव तदपवादापवादार्थमेतदधिकरणद्वयमेतदिति तच्छब्देनानन्तर्य-
विशेषात्प्रधानत्वलक्षणं परामृश्य तदपवादस्य गुणत्वलक्षणस्यापवा-
दार्थमित्येवं व्याख्यातं वक्ष्यमाणगुणकर्मत्वापवादादुपचारतो
लक्षणापवादाभिधानं यदा तु सम्मार्गादिसाध्यस्यादृष्टोपकारस्यावा-
न्तरद्वारत्वाभावान्नापूर्वशब्दवाच्यतेष्यते तदा गुणकर्मस्वदृष्टार्थेष्वप्य-
पूर्वाभावाद् गुणकर्मलक्षणद्रव्योपकारत्वस्य सम्मार्गादावपवादमभा-
वमव्यापकत्वमाशङ्क्य व्यापकत्वसिद्धये तदपवादार्थमेतदधिकरणम्।
उत्तरं तु स्तुतशस्त्रयोर्गुणकर्मत्वाभावे ऽप्युपकारकत्वसद्भावाददति-
व्यापकत्वाभिधानेनापवादार्थमित्यध्यायार्थानुक्रमणवार्तिकं व्याख्ये-
यम्। अस्मिंस्तु व्याख्याद्वये नास्याधिकरणस्य प्रधानकर्मलक्षणापवा-
दार्थत्वाभिधानार्थं यैर्द्रव्यं न चिकीर्ष्यतइत्यनेन प्रधानकर्मलक्षणेनाहे-
त्युक्तं किं तु पूर्वपक्षबीजप्रदर्शनार्थं किमाहेत्यपेक्षायां सङ्क्षेपतः पूर्व-
पक्षार्थमाह * द्रव्येणेति * कर्मणो ऽनुपकारित्वाद् गुणत्वाभावे
ऽप्युपकार्यत्वस्याप्यभावात्प्राधान्यमपि न स्यादित्याशङ्कानिरासार्थत्वे-
न द्रव्यं त्वेवं जातीयकमदृष्टार्थं कर्माभिर्निर्वर्त्तयत्तत्प्रतिगुणभूत-
मित्येवं भाष्यावयवं व्याख्यातुम् * द्रव्येणेत्युक्तम् * द्वितीयाया

१ व्याख्याने. इति २ पु॰ पा॰।

गुणकर्मत्वप्रामाण्यासम्भवमभिप्रेत्य तदन्यथानुपपत्तिकल्प्यादृष्टोपकारायोगाद् दृष्ट एवोपकारो वाच्यो न चासावस्तीति न * दृश्यतइत्युक्तम् *

तुल्यश्रुतित्वाद्वेतरैः स धर्मः स्यात् ॥ १० ॥

नन्ववघातादिपूक्तस्य गुणकर्मलक्षणस्येहाभावात्तत्साधर्म्याभिधानमयुक्तमित्याशङ्क्याह * नैव हीति * यस्मान्नैतल्लक्षणं तस्माद् गुणकर्म्मत्वप्रमाणद्वितीयातुल्यत्वात्साधर्म्याभिधानं युक्तमिति हि शब्दार्थः । पूर्वोक्तलक्षणत्यागे हेतुमाह * उपकारेति * तथा सति को विरोध इत्याशङ्क्याह * तादर्थ्येति * प्रत्यक्षं यजतइत्यादिभिर्द्रव्यं न चिकीर्ष्यतइति भाष्यात्प्रत्यक्षगम्यस्योपकारस्य लक्षणतोक्ता भाति सा च तृतीये निषत्स्यमानत्वाद्विरुद्धेतेति * श्रुत्यादीत्यनेनोक्तम् * न प्रत्यक्षादेर्ज्ञापकत्वेन निमित्तत्वं नाप्युपकारस्य कारकत्वेनेत्यर्थः । लक्षणत्वाभावे किमुपन्यासप्रयोजनमिति प्रश्नपूर्वकमाह * किमर्थं . तर्हीति * अपूर्वाभावोपयोगितल्लक्षणं न स्वातन्त्र्येणेत्याशयः । श्लोकं व्याचष्टे * यत्रेति * पूर्वपक्षस्तर्हि न सम्भवतीत्याशङ्क्याह* पूर्वपक्षेति * द्वितीयाप्रमाणकगुणकर्मत्वायोगादेतल्लक्षणाधीनत्वमापाद्य पूर्वपक्ष इति भावः । अवघातादौ द्रव्ये द्वितीयाया गुणकर्मत्वेन व्याप्तिः सधर्मशब्देनोक्तेति भ्रान्त्या ऽनैकान्तिकत्वादिदोषदुष्टत्वान्नेह सामान्यतो दृष्टं सम्भवतीति किं गुणकर्मणीति प्रश्नद्वाराशङ्कितेनेति ब्रूम इति भाष्येणेप्सिततमाख्यप्राधान्यवाचित्वस्मृतेः । प्रतियोगिनः कर्मणो गुणत्वावगतिरिति परिहृत्य * यद्यपीत्युक्तम् * तदुक्तार्थत्वात्प्रत्यक्षाद्यगृहीते ऽर्थे शब्दप्रामाण्यशङ्कायाश्च प्रागेव निरस्तत्वेनासम्भवादनर्थकमाशङ्क्योपकारं विना विहितस्य कर्मणो ऽङ्गत्वापरपर्यायगुणत्वानुपपत्तिशङ्कानिरासार्थत्वेनोपकारं लक्षणया गुणभावशब्देनोक्ता प्रत्यक्षगम्योपकाराभावे ऽपि शब्दावगताङ्गत्वान्यथानुपपत्त्योपकारकत्वकल्पनं भविष्यतीति प्रतिपादनार्थत्वेनार्थवदिति सूचयितुमाह * सिद्धान्तेति * पश्चादुपकारापेक्षायां दर्शनं कल्पनं वा भविष्यतीत्यर्थः । एवं चोपकारकत्वस्याप्यव्याप्तिः परिहृता एतदेव व्याचष्टे: * तत्रेति *

द्रव्योपदेश इतिचेत् ॥ ११ ॥

३८७। पूर्वपक्षाभिप्रायविवरणार्थत्वेन सूत्रं व्याचष्टे* परस्त्विति * श्लोकं व्याचष्टे * तन्नामेति * उपदेशान्यथानुपपत्तिलभ्यगुणभूतत्व

विशेषणं गुणभूते ऽपीति भाष्योक्तं दर्शयितुम् * गुणभूतेत्युक्तम् * भाष्योक्तमन्वयव्यभिचारोदाहरणं दर्शयित्वा स्वयं व्यतिरेकव्यभिचारोदाहरणम् * तथेत्यनेनोक्तम् * हविषामभिघारणाधारत्वे ऽपि आधारनियमजन्यसंस्कारभाक्तेन प्राधान्यस्यापि विवक्षितत्वादन्वयाव्यभिचारादनुदाहरणत्वम्।व्यभिचाराभिधानस्य प्रकृतोपयोगमाह * अत इति * सत्यामपि द्वितीयायामित्यर्थः।

न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥१२॥

न गुणभूतइति भाष्येण व्यभिचारनिरासार्थत्वेन सौत्रं नञं व्याख्याय तदुपपादनाय एवं हीत्यनेन स्मृतिरुपन्यस्ता। तत्र पूर्वपक्षिणा प्रयोगव्यभिचारस्योक्तत्वात्तन्निरासार्थं घटं करोतीत्यादौ प्राधान्ये ऽपि प्रयोगादनेकार्थत्वस्य वान्याय्यत्वाद्व्याप्यत्वेप्सितमत्वसमुदायात्मकेप्सिततमत्ववाचिन्याश्च द्वितीयायास्तदेकदेशव्याप्यत्वमात्रेण लक्षणया विषं भक्षयतीत्यादौ प्रयोगदर्शनाद्व्याप्यत्वमात्रवाचित्वेप्सतमत्वाधिक्यप्रतीत्ययोगाद् गुणत्वे तु क चिदप्रयोगात् प्राधान्यमेव वाच्यमिति प्रयोग एवोपन्यसनीयः। तमुपेक्ष्य स्मृत्युपन्यासस्याभिप्रायमाह * तिष्ठत्विति * स्मृतौ सत्यां प्रयोगो नादर्त्तव्य इत्याशयः। प्रयोगाविरोधो ऽपि न चेति भाष्येण वक्ष्यतइति तावच्छब्दार्थः। एतदेव प्रश्नपूर्वकमुपपादयति * किमिति * विशेषतो ऽत्रेत्याह * विवक्षेति * एतदेव व्याचष्टे * यदि हीति * तथा युक्तं चानीप्सितमिति स्मृतिस्तु लाक्षणिकप्रयोगसाधुत्वान्वाख्यानार्थान्यथालाघवाद्व्याप्यं कर्मेति स्मरणापत्तिरित्याशयः। न चेति भाष्यं प्राधान्ये ऽपि प्रयोगानुपन्यासात्परोक्तवैदिकप्रयोगप्रतियोगिप्राधान्यप्रयोगानुपन्यासाच्चापूर्वमाशङ्क्य पूरयितुमाह * तथा चेति * यदपि चेत्यादिभाष्यं सङ्कल्प्य तात्पर्यतो व्याचष्टे * यानि त्विति * ओदनशिखण्डाख्यकर्मान्तरोपादानात् पचतिकरोत्योश्च द्विकर्मकत्वाभावात्तण्डुलवल्वजयोस्तदन्वयार्हतया करणत्वावगतेर्होमान्वये च होमस्याग्न्यधिकरणत्वप्रसिद्धेरग्नौ प्रक्षेपेण भस्मसाद्भावापत्तेः प्राधान्यायोगात्तृतीयार्थे द्वितीयेति शङ्काभिप्रायः। परिहाराभिप्रायमाह * तत्रेति * ओदनाद्यवस्थायास्तण्डुलाद्यवस्थया सह भिन्नाभिन्नत्वाद्भेदविवक्षायां तण्डुलादेर्गुणाकारत्वमभेदविवक्षायां प्रधानाकारतेत्यर्थः। प्राधान्यांशमुपादायेति विशेषणसामर्थ्यसूचितं तादर्थ्यं व्याचष्टे * यदेति * श्रुत्यु- ३८८।२

१ अपूपति २ पु० पा०।

क्तं व्याचष्टे * यदात्विति * यदा तण्डुला वल्बजाश्चाप्तुमिष्यन्ते यदा च तण्डुलान्होमसम्बन्धित्वेनाभिप्रेत्यैवम्प्रेष्यति तदा प्राधान्यभावं भजन्तीत्यर्थः। तण्डुलानां होमाङ्गत्वाभावे होमसम्बन्धित्वेनेप्सितत्वायोगात्तण्डुलैर्जुहोतीति वेदवाक्येन गुणाभावावगतिरुक्ता होमसम्बन्धिनो भस्मीभावादीप्सितत्वानुपपत्तिमाशङ्क्य स्वस्य कण्डनाख्यस्य कर्मणः शोभादर्शनार्थमित्युक्तम्। पुंसः कण्डने शोभाबुद्ध्यभावात्। ब्राह्मण्या इति स्त्रीविषयतोक्ता एतावता तण्डुलानामीप्सितत्वायोगेनापरितोषात् गुणकामो वेत्युक्तं वीर्यकामस्तण्डुलैर्जुहोतीति तण्डुलानां वीर्यसाधनत्वश्रुतेर्या पत्युरात्मनो वा वीर्यं कामयते सा तेषां प्राधान्यं विवक्षतीत्यर्थः। ईप्सिततत्वाभिप्रायस्य सम्भवित्वाभिधानार्थं भवति हीति भाष्यं व्याचष्टे * भवति हीति * तण्डुलालानोदनं पचेत्यादौ केन चिद्भेदविवक्षादिना कारणेन; कश्चिदोदनावस्थापरिणतिरूपः प्राधान्यांशो विवक्ष्यते अगारे गावो वास्यन्तामिति प्रधानभूते ऽप्यगारे गुणांशस्तण्डुलान्पच तैरोदनं कुर्वित्युभौ सन्ति तण्डुला इत्यंशद्वयस्याप्यविवक्षादीप्सिततत्वाभिप्रायासम्भवे ऽपि लक्षणया प्रयोगोपपत्तेर्न गुणत्वस्यापि द्वितीयावाच्यत्वकल्पनोचितेत्यभिधानार्थमन्यायश्चेति भाष्यं व्याचष्टे * न चेति * तेनेत्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * ननु वेदे वक्तृभावेन वैवक्षिकप्राधान्यायोगात्सक्तवादेश्च वास्तवप्राधान्याभावाद् गुणत्ववाचित्वाभावे द्वितीया न स्यादित्याशङ्कार्थं वेदे त्विति भाष्यं व्याचष्टे * कथं त्विति * द्वितीयेत्यादिपरिहारभाष्यं व्याचष्टे * तदुच्यत। इति * सक्तुषु विद्यमानं प्राधान्यं, कथं वदतीत्याशङ्क्य * स्वत इत्युक्तम् * गुणाभावोपपत्तिप्रश्नापाकरणार्थं प्राधान्याभावाभिधानस्य गुणत्वलक्षणापर्यवसायित्वमुत्तरार्द्धेन दर्शयता स एव द्वितीयान्त इत्यादिवक्ष्यमाणं भाष्यमनागतावेक्षणेन व्याख्यातं श्लोकं व्याचष्टे * द्वितीया तावदिति * कुतो हेतोः प्राधान्याभाव इति पृष्टे होमस्य सक्त्वर्थत्वं च कल्पते इति सम्भवलक्षणहेत्वभिधानार्थं न होमस्येति भाष्यं स्पष्टत्वादव्याख्याय कुतो होमस्य सक्त्वर्थत्वं नावकल्पतइति प्रश्नार्थं कुत इति भाष्यं व्याचष्टे * कथं
३८९।४ पुनरिति * सक्तूनामित्युत्तरभाष्यं व्याचष्टे * अत आहेति * श्लोकं व्याचष्टे * यस्य हीति * यत्पुनरिति पूर्वार्द्धार्थोपपादनेन यदीति भाष्यमपि प्रसङ्गाद्व्याख्यातम्। नन्वेवं प्राधान्यासम्भवे ऽप्यश्रुतगुणत्वाङ्गीकरणं कथमित्याशङ्क्याह * तत्रेति * नन्वेवं सति प्राधान्यप्रतीतेर्भ्रान्तित्वं स्यादित्याशङ्क्याह * मुख्यार्थेति * अपवादे

सत्युत्सर्गस्य भ्रान्तिता युक्तेत्याशयः । ननु लोके प्रमाणान्तरेण गौणलाक्षणिकार्थपरत्वावसायान्मुख्यार्थत्यागो युक्तो न तु वेदे प्रमाणान्तराभावादित्याशङ्क्याह *सर्वत्रैवेति* लोकेऽप्यानर्थक्यप्रसङ्ग एव लक्षणादिनिमित्तं तदभावेऽर्थान्तरे तात्पर्यस्याशक्यज्ञानत्वान्मुख्यस्यैवार्थस्योपपत्तेरित्यर्थः । अथेत्यादिभाष्यं सङ्क्षेपतो व्याचष्टे * तेनेति * नन्वित्याशङ्काभाष्यं निर्व्यापारस्य द्रव्यस्य क्रतूपकाराख्यप्रयोजनसाधनत्वायोगाद्धोमातिरिक्तस्य च व्यापारस्याश्रुतेर्होमे च सति भस्मसाद्भावापत्तेरयुक्तमाशङ्क्य व्याचष्टे * नन्विति * हूयमानावस्थानामुपकारसाधनत्वं भविष्यतीत्याशयः । को वेति परिहारभाष्यं पूर्वोक्तानिष्प्रयोजनत्वविरोधित्वादयुक्तमाशङ्क्य व्याचष्टे * सिद्धान्तेति * नन्विति भाष्येण सक्तूनामपि प्रकरणग्रहणात्साक्षादुपकारसाधनत्वं भविष्यतीत्याशङ्क्य द्रव्यस्याक्रियात्मकत्वात्प्रकरणाग्रहणाभिधानार्थं तदुच्यतइति भाष्यं व्याचष्टे * सर्वत्रेति* आदिशब्देनेत्थं भावेनैवोपादानम् । ननु द्रव्यस्यापि विधीयमानस्य किं भाव्यमित्यपेक्षायामनीप्सितत्वेन वाक्यसंयुक्तायाः क्रियाया भाव्यत्वायोगात्साक्षात्पुरुषार्थस्य ज्योतिष्टोमेनावरोधात्तदुपकारस्यैव भाव्यत्वावगतेः कथं भावादिना सङ्गतिर्भविष्यतीत्याशङ्कां निरस्यन् श्लोकं व्याचष्टे * यथेति * किमित्यपेक्षायामप्यक्रियात्मकत्वात् कथं भावेनाग्रहणमित्यर्थः । ननु सक्तूनां साक्षात्करणोपकारसाधनत्वासम्भवेऽपि होमद्वारा भविष्यतीति नन्विति भाष्येणाशङ्क्य नास्तीत्यनेनं निरस्तं तदभिप्रायतस्तावद्व्याचष्टे * न चेति*कथं तर्हि गोदोहनादेरदृष्टसाधनतेत्याशङ्क्याह* यत्रापीति*स्वस्वरूपतो व्याचष्टे*न चेति*नन्विति शङ्काभाष्यं व्याचष्टे *द्वितीयेति*न हीति परिहारभाष्यं प्रतीतिविपरीताभिधानादयुक्तमाशङ्क्य छित्वा व्याचष्टे *न हीति* हेतुत्वेनोत्तरावयवं व्याचष्टे * द्वितीया हीति* कथं द्वितीयायास्तादर्थ्यज्ञापकतेत्याशङ्क्य *प्राधान्यमित्युक्तम्* कुर्याच्छब्देनावास्तवत्वं सूचितम् । ननु सक्तूनां प्रयोजनवत्त्वाभावे होमस्य तादर्थ्यायोगात्तदन्यथानुपपत्त्या प्रयोजनवत्त्वकल्पनावसीयतइत्याशङ्क्य होमव्याप्यत्वेन सक्तूनामौपचारिकं होमस्य सक्त्वर्थत्वं न प्रयोजनवत्त्वकल्पनायालमित्यभिधानार्थं भवेदिति भाष्यं व्याचष्टे * तेनेति * येन कारणेन सक्तूनां प्रयोजनवत्त्वं द्वितीया ३९०।१
न ज्ञापयति तेन मुख्यतादर्थ्यायोगादौपचारिकी सक्त्वर्थतेति प्रसादशब्देन सूचितम् । सक्तूनां त्यागप्रक्षेपांशमात्रव्याप्यत्वेऽपि देवतोद्देशद्रव्यत्यागप्रक्षेपसमुदायात्मकहोमव्याप्यत्वाभावसूचनार्थं कथं ना-

नेत्युक्तं व्याप्यत्वमात्रस्य प्रयोजनवत्त्वकल्पनाशक्तिर्नैत्यनेनोक्ता । ननु क्रियाजन्यफलाश्रयत्वलक्षणं व्याप्यत्वमपि होमविनाश्यानां सक्तूनामयुक्तमित्याशङ्क्याहवनीयप्राप्त्युत्तरकालं विनाशे ऽप्याहवनीयप्राप्त्याख्यक्रियाफलाश्रयत्वाविरोधसूचनार्थं भवन्तीति भाष्यं व्याचष्टे * तत्रेति * उद्देशत्यागप्रक्षेपसमुदायं प्रति कस्य चित्कर्मत्वायोगात्तद्वाचिनो जुहोतेरकर्मकत्वे ऽप्यंशकल्पनया त्यागप्रक्षेपांशविषयौपचारिकव्याप्यत्वाभिधानाख्यकर्मवाचित्वे ऽपि द्वितीयायाः प्रयोगजनकत्वकल्पनासामर्थ्यप्रदर्शनार्थतां दर्शयितुमाहेतीति व्याप्यत्वे प्राधान्योपचारः । ननु प्रयोजनवत्त्वकल्पनासामर्थ्यो ऽपि द्वितीयाया होमस्य सक्त्वर्थत्वज्ञापकत्वाभ्युपगमेन होमस्य केन चित्प्रकारेण सक्त्वर्थतेति पूर्वोक्तं विरुध्येतेत्याशङ्क्य सक्त्वर्थत्वाभिधानसम्बन्धशब्दसूचितौपचारिकत्वप्रदर्शनार्थं होमस्य सक्त्वर्थतेत्यादिभाष्यं व्याचष्टे * तत्रेति * सक्तूनामदृष्टार्थत्वकल्पनेन सक्त्वर्थत्ववचनस्यानर्थक्यपरिहारशङ्कानिरासार्थं न च तद्वचनादिति भाष्यावयवमानर्थक्यस्यावश्यपरिहर्त्तव्यत्वात्प्रकारानभिधानाच्चायुक्तमाशङ्क्यौपचारिकत्वाख्यप्रकारान्तराभिप्रायत्वेन जिज्ञासापूर्वकं व्याख्यातुम् * तद्वचनाद्वेत्याद्युक्तम् * पुरुषदोषकृतत्वाच्छाब्दज्ञानभ्रान्तत्वस्य वेदे ऽनुपपत्तेर्भ्रान्तिशब्देनौपचारिकतोक्ता श्रोतृदोषाद्वा मुख्यार्थत्वज्ञानस्य भ्रान्तित्वम् । एतदन्तेन च न होमस्य केन चित्प्रकारेणेत्यादिभाष्येणैवमवगते प्राधान्ये बलीयसा हेतुना नास्ति प्राधान्यमित्यवगम्यतइत्येतदेवोपपादितमिति सूचयितुं प्राधान्योक्तिः । नन्वेवं द्वितीयावगतप्राधान्याभावावगमे ऽपि कथं द्वितीयानिर्दिष्टे गुणभाव इति प्रश्नो नापाकृतः स्यादित्याशङ्कानिरासार्थं स एव इत्यादिभाष्यं विरोधात्तेन सम्बन्धीगुणाभावस्तु लक्ष्यतइत्यनेन प्रागेव व्याख्यातत्वादुपेक्ष्यास्मिन्नेवार्थे भगवदुपवर्षसम्मतिप्रदर्शनार्थं गुणभावे चेति भाष्यं व्याचष्टे * ततश्चेति * स्थानशब्देन गुणभावस्य द्वितीयार्थता निरस्तेत्याशयः । देवतोद्देशद्रव्यत्यागप्रक्षेपाख्यधात्वर्थत्रयसमुदायरूपं जुहोत्यर्थं प्रति देवताया द्रव्यस्य वा कर्मत्वायोगात् जुहोतियोगे कर्मणि द्वितीयानुपपत्तेस्तृतीयार्थवाचितोपवर्षेणोक्ता । व्याकरणे द्वितीयायास्तृतीयार्थवाचित्वानभिधानाद्वा परीष्टिर्निमित्तानां कर्त्तव्येत्युपपादिता सा महाभाष्यकारेण न कर्त्तव्येति वर्णितेत्युपवर्षे महाभाष्यकारशब्दप्रयोगाच्चैवं व्याख्यातः । द्वितीयोक्तस्यापि सक्तुप्राधान्यस्यासम्भवाद् बाध इति सकलस्य तात्प-

---

१ प्रयोजनवत्त्वेति २ पु० पा० ।

र्थं तेनेत्यादिभाष्येण तदर्थत्वादिति तच्छब्दो धर्ममात्रे तु कर्मेति व्यवहितनिर्दिष्टस्यापि कर्मणो योग्यत्वात्परामर्शकः कस्य तदर्थता विवक्षितेत्यपेक्षायां च द्रव्योपदेश इति द्रव्यशब्दस्त्वधिकरणविषयभूतः संसर्गादिसंस्कार्यत्वेनाभिमतस्य स्रुगादेः परामर्शक इत्यङ्गीकृत्य सूत्रावयवद्वयं व्याख्यातम्। तत्र लोकवदिति सूत्रावयवमव्याख्याय प्राक् तस्य चेति सूत्रावयवव्याख्यानं किमर्थमित्याशङ्क्य होमसंसर्गवैषम्याभिधानार्थत्वं दर्शयितुमाह * तेनेति * कथं सक्तूनां होमार्थतेत्यपेक्षायां तेनेति भाष्यगतेन तच्छब्देन निष्प्रयोजनत्वं हेतुत्वेन परामृष्टमिति निष्प्रयोजनशब्देन सूचितं तत्रेति भाष्यावयवव्याख्यानार्थम् * पर्यग्निकरणादीत्युक्तम् * लोकवदिति सूत्रावयवपातनिकार्थं पर्यग्निकरणादेर्दृष्टोपकारजनकत्वाभावात् संस्कारत्वासम्भवमाशङ्क्यादृष्टोपकारजनको ऽपि संस्कारः सम्भवतीत्यभिप्रायकथनार्थं न स इत्यादिभाष्यं व्याचष्टे * दृढे चेति * तदुपपादनाय लौकिकदृष्टान्ताभिधानार्थं लोकवदिति सूत्रावयवं व्याख्यातुम् अदृष्टो ऽपीति भाष्यं व्याचष्टे * लोके ऽपीति * शान्त्यर्थत्वेनादृष्टार्थतोक्ता। ननु लोकप्रसिद्धमपि पर्यग्निकरणस्यादृष्टसंस्कारार्थत्वं प्रमाणाभावादयुक्तमित्याशङ्कानिरासार्थं लोके चेति भाष्यं व्याचष्टे * न चेति * मूलश्रुतिकल्पनेनाचारस्यापि प्रामाण्यादित्यर्थः। सिद्धान्तमुपसंहरति * तेनेति * ननु पुरोडाशादेः प्रयोजनवत्त्वेन पर्यग्निकरणादिप्रतिप्राधान्ये तस्यैव सक्त्वादिष्वभावेनाव्यभिचारित्वात्प्राधान्ये हेतुत्वोपपत्तेः। द्वितीयोपन्यासो ऽनर्थक इत्याशङ्कते * नन्विति * केवलतृतीयाकृतो वेत्यनेन निष्प्रयोजनत्वस्यैव सक्त्वादिष्वव्यभिचारित्वाद् गुणभावहेतुत्वोपपत्तेर्गुणभावे च तृतीयेतिभाष्यसूचितस्तृतीयाहेतुकगुणभावोपन्यासो ऽप्यनर्थक इति सूचितम्। द्वयोः प्रयोजनवत्त्वाविशेषे ऽन्यतरप्राधान्यस्य प्रयोजनवत्त्वेनाशक्यज्ञानत्वात्प्रयोजनवत्त्वानपेक्षद्वितीयाकृतमेव प्राधान्यमित्यत्र तावद् दृष्टान्तमाह * तदुच्यतइति * इन्द्रस्यापि गार्हपत्यवत् क्रत्वङ्गत्वेन प्रयोजनवत्त्वाविशेषात्तन्निरपेक्षद्वितीयाकृ- ३९।१।२
तमेव प्राधान्यमित्युक्तम्। ननु तत्र कतरस्य प्राधान्यमिति सन्देहे निर्णायकान्तराभावात् निर्णयमात्रे द्वितीयोपयोगो न विनियोग इत्याशङ्क्य * लिङ्गादित्युक्तम् * न च वाक्याद् गार्हपत्यप्राधान्यं गार्हपत्यसमीपे स्थित्वेन्द्रमुपतिष्ठेतेत्येवमपि तदेकवाक्यत्वोपपत्तेरिति गार्हपत्येत्यनेनोक्तं निष्प्रयोजनत्वनिरपेक्षकेवलतृतीयाकृतमेव गुणत्वमित्यत्रापि दृष्टान्तमाह * तथेति * सूक्तवाकस्येष्टदेवताप्रका-

शनार्थत्वात्प्रहरणस्य च स्रुगासादनोपयुक्तप्रस्तरप्रतिपत्त्यर्थत्वात्प्रयोजनत्वाविशेषान्नैकस्यापि निष्प्रयोजनतेत्यर्थः । सक्तूनामपि तर्हि द्वितीयया प्राधान्यं स्यादित्याशङ्क्याह * तेनेति * भाष्योक्तं विचारप्रयोजनं दूषयति * प्रयोजनं त्विति * आद्येनादिशब्देन परिद्धगुपादानं द्वितीयेन हिरण्मयीत्ववाणवत्त्वयोः सिद्धान्तवत्पूर्वपक्षे ऽप्यङ्गप्रधानार्थत्वात् प्रयोजनाविशेष इत्यर्थः । ननु प्रियङ्गुवत्प्रकरणात्प्रधानमात्रार्थतावगतेनाङ्गप्रधानार्थतेत्याशङ्कां निरस्यन् श्लोकं व्याचष्टे * प्रियङ्गवो हीति * प्रैयङ्गवश्चरुरिति वाक्यात् प्रधानयागसाधनचरुप्रकृतित्वप्रतीतेः प्रियङ्गूणां प्रधानमात्रार्थत्वं न प्रकरणादित्याशयः । यथा च बर्हिरादेस्तृतीये वाक्यसंयोगबलीयस्त्वेनाङ्गप्रधानहविरासादनार्थत्वं वक्ष्यते तथा शमीमयीत्वादेरङ्गप्रधानस्रुगाद्यर्थतेत्यर्थः । ननु यथा यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्त्तव्या इत्युपांशुत्वं विकृतावातिदेशिकत्वेनाप्राप्तावस्थेष्वङ्गेषु विधीयमानत्वात्प्रधानमात्रार्थं तथैतदपीत्याशङ्कते * स्यादेतदिति * वैकृताङ्गविधिकाले प्राकृतस्याङ्गस्य विकृतावचोदितत्वादित्येकेषां व्याख्यानमुपजीव्यैतत्सूत्रं पठितम् । काम्यशब्दोपात्तस्य प्रधानमात्रस्य तच्छब्दपरामृष्टस्योपांशुत्वविधेरङ्गसम्बन्धित्वेनोपांशुत्वस्याचोदितत्वादिति तार्त्तीयसूत्रार्थमभिप्रेत्य परिहरति * तदिति * श्लोकं
३९२।१ व्याचष्टे * यज्ञाथर्वणेति * शङ्किताभिप्रायं विवृणोति * ननु चेति * परिहृत्तौ निरस्यति * नार्हतीति * परव्याख्यानुपपत्तौ हेतुम् * आहैवं हीति * तृतीये निर्देशात्तु विकृतावपूर्वस्यानधिकार इत्यत्र बर्हिर्यूपावटमवस्तृणातीत्यप्राकृतयूपावटस्तरणाख्यकार्यार्थबर्हिरर्थत्वं प्राकृतानां बर्हिर्धर्माणामस्ति नास्तीति चिन्तायाः प्राकृतवैकृताङ्गप्राप्तिपौर्वापर्यचिन्ताधीनत्वाद्धर्मसाधारण्यशास्त्रातिदेशयोश्च सप्तमदशमाद्ये निषेत्स्यमानत्वेन तदभिप्रायपूर्वपक्षायोगात्प्रत्यक्षत्वेन प्राग्वैकृताङ्गप्राप्तेः पश्चादतिदिश्यमानेन बर्हिर्लुनातीत्यादिशास्त्रेण सर्वप्राकृतवैकृतबर्हिरनुवादेन लवनादिधर्मविधिसम्भवाद्यूपावटस्तरणबर्हिषो ऽपि धर्मवत्तेति पूर्वपक्षिते क्लृप्तोपकाराङ्गसम्भवे कल्पनागौरवापादकाक्लृप्तोपकाराङ्गानाकाङ्क्षणाद्विकृतौ प्राकृतानामङ्गानां पूर्वनिर्देशान्नापूर्वस्य वैकृतस्य यूपावटस्तरणबर्हिषः प्राकृतधर्मविधावधिकार इति सिद्धान्तस्य वक्ष्यमाणत्वात् प्राकृतानामङ्गानां वैकृतेभ्यः प्राक्प्राप्तिः स्थास्यतीत्यर्थः । किं चोपदेशेनानुवाद्यस्रुक्परिधिप्राप्तये ऽतिदेशः प्रागेवेष्टव्य इत्याह * अवश्यं चेति * अनिष्टापत्तेरपि प्रधानमात्रार्थता न युक्तेत्याह * किं चेति * नन्वस्मि-

न्पक्षे पर्णतादेरपि प्रधानमात्रसम्बन्धापत्तेः । प्रकृतौ प्रयाजादिस्रुक्षु प्राप्त्यभावात् कथं विकृतौ प्रसक्तिरित्याशङ्क्य तद्यद्युक्तं प्रकृतौ कार्यस्याक्लृप्तत्वात्पदार्थोद्देशेन विधीयमानेषु धर्मेषु पर्णमयादिवाक्यैर्जुह्वादिमात्रोद्देशेन पर्णतादिविधानादङ्गप्रधानस्रुगर्थत्वं युक्तं विकृतौ तु प्राकृतकार्यपृष्ठेन पदार्थप्राप्तेः स्रुक्शब्दलक्षितकार्योद्देशेन शम्यादिविधीयमानं जुह्वा जुहोति स्रुवः सम्मार्ष्टीति प्राकृतकार्यद्वयसद्भावे ऽप्येकत्रैव प्राकृतधर्मबाधेन चरितार्थस्य वैकृतधर्मविधेरन्यत्रापि बाधकत्वायोगात्कस्मिन्नेकस्मिन्विधीयतामित्यपेक्षायां प्रकरणात् प्रधानभूतहोमाख्यकार्यार्थत्वप्रतीतेः । प्रधानमात्रार्थत्वमिति यस्य ते प्रकृतौ नानावृक्षस्रुक्सम्मार्गसाध्यमपूर्वमिति वदतः पक्षस्त्वन्मते ऽनिष्टापत्तिरेषेत्याशयः । ननु प्रयाजानामपि होमाख्यकार्यसद्भावाच्छम्यादिविधानोपपत्तेः कथं प्राकृतजातिप्रसक्तिरित्याशङ्क्याह * य एव हीति * होमत्वाविशेषे ऽपि प्रधानहोमेभ्यः प्रयाजादिहोमानां भेदात्सम्मार्गवत्प्राकृतविरुद्धवैकृतधर्माप्राप्तिरित्याशयः । नन्वेवं सत्येवमेवयुक्तत्वात्कानिष्टापत्तिरित्याशङ्क्याह *न चेति* अयं भावः स्रुक्कार्यस्य शमीजात्या कर्त्तुमशक्यत्वात्स्रुक्कार्ये च शमीविधौ स्रुवां बाधापत्तेः । कार्ये विधीयमाना शमी पर्णतादिकार्ये स्रुक्प्रकृतिद्रव्यपरिच्छेदलक्षणे स्रुक्शब्दोपस्थापिते विधीयेत तस्य च पर्णमयी जुहूर्भवतीत्याद्युपदेशविध्यैकार्थ्यनैकत्वात्तदुद्देशेनापि विधीयमानायाः शम्याः सर्वार्थतैव युक्ता । अथ स्रुक्प्रकृतिपरिच्छेदत्वेनैकरूपत्वे ऽपि प्रधानस्रुक्प्रकृतिपरिच्छेदलक्षणात्कार्यादङ्गस्रुक्प्रकृतिपरिच्छेदलक्षणस्य कार्यस्यान्यत्वाद्विकृतौ प्रयाजादिस्रुग्वर्जनं ततः प्रकृतावप्यपूर्वसाधनांशे धर्मविध्यभ्युपगमात्प्रधानापूर्वसाधनस्रुगर्थतैव पर्णतादेर्बर्हिषश्च प्रधानहविर्मात्रसादनार्थता स्यादिति सर्वेषां वेति न्यायो बाध्येत । अथ प्राकृताङ्गबाधेन वैकृताङ्गनिवेशादेकत्र च बाधेन चरितार्थस्य वैकृताङ्गविधेः सर्वत्र बाधकत्वायोगान्न विकृतावसौ न्यायः । ततो ऽङ्गगुणविरोधन्यायेनाङ्गस्रुक्ष्वेव प्राकृतजातिबाधस्य युक्तत्वाद्वैपरीत्यापत्तिरुपदेशेनातिदेशबाधस्यानुग्रहपक्षवृत्तित्वात्प्रधानगुणबाधाभ्युपगमे ऽङ्गानामप्यनुग्राह्यत्वासर्वार्थतैव पुनरापन्नेति अभ्युपगम्यापि किं चिच्छमीमयीत्वादेः प्रधानमात्रसम्बन्धकारणं प्रधानस्रुचामेव विकृतावपि प्रसङ्गेनाङ्गसाधनत्वोपपत्तेः पर्णमयीत्वादेश्च स्रुक्प्रयोजकत्वाभावात्तदुद्देशेनापि स्रुगन्तरोपादानायोगात्सम्मार्गः स्रुक्षु पर्णतादिप्राप्तिः पूर्वपक्षे नास्तीत्याह * यद्यपि

१ अङ्गगुणविरोधे च तादर्थ्यादिति न्यायः ।

चेति *-ननु पशुयागस्य वपाप्रचारेणोपक्रमादङ्गप्रचारेण चोपसंहारात्तन्मध्यपातिनः पुरोडाशस्य पाशुकैरङ्गैः प्रसङ्गोपकारदर्शनात्सम्मार्गादेः प्रधानप्रम्मवित्वात्तद्बहिर्भूतस्य कथं प्रधानार्थाभिः स्रुग्भिः प्रसङ्गेनोपकार इत्याशङ्क्य*सौमिकेत्युक्तम् * षड्त्रिंशत्प्रक्रमा प्राचीत्यादिवाक्यविहिताया वेदेस्तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यादित्यत्र तृतीये साङ्गसोमयागार्थत्वेनोक्तायाः अप्यौपवसथ्याहे क्रियमाणत्वेन तत्प्राचीनाङ्गार्थत्वाभावाद्वेदिकरणोत्तरकालभाव्यग्नीषोमीयपशुयागार्थत्वे च सत्यपि तत्प्रक्रमात्प्रागेव सौमिकाग्निप्रणयनप्रक्रमे ऽनुष्ठानेन सोमार्थानुष्ठानावधारणात् सौमिकत्वाभिधानं तथा च प्रधानार्थयाप्यग्नीषोमीयादिष्वतिदेशप्राप्तदार्शपौर्णमासिकवेदिकार्यस्य हविरासादनस्यापि प्रसङ्गात्सिद्धेर्दार्शिकपौर्णमासिकी यजमानसम्मिता वेदिर्निवर्त्ततइति' द्वादशे वक्ष्यते । अतस्तन्त्रिमध्यपाताभावे ऽपि तन्त्रमध्यपातनमात्रेण प्रसङ्गो भवतीत्याशयः । ननु महावेदेः सोमार्थत्वे ऽप्यग्नीषोमीयार्थत्वस्यापि भावात्तदङ्गकार्यान्तरसाधकतापि प्रसङ्गाद्युक्ता । शमीमयीत्वस्य तु प्रधानमात्रसम्बन्धे ऽङ्गार्हत्वाभावात्कथं प्रसङ्गेनाङ्गोपकारितेत्याशङ्क्य दक्षिणाः सोमस्येति वाक्यात्प्रधानमात्रार्थाया अपि दक्षिणायाः प्रसङ्गेनाङ्गोपकारित्वाद्दीक्षणीयादिष्वतिदेशप्राप्तान्वाहार्यनिवर्त्तकत्वात् द्वादशसिद्धमेव दृष्टान्तितम् ।अर्थाभिधानकर्म चेति चतुर्थन्यायेनाप्रयोजकत्वाभ्युपगमे ऽपि वा यथाश्रुतसम्मार्गानिष्पत्तेः प्राकृतजात्युपसंग्रहो न युक्त इत्याह * किं चेति * अग्निपरिधानाख्येन कार्येण परिधेः स्वरूपं लक्षितं स्रुचां चादिशब्दोपात्तानां द्रव्यवृत्त्याख्येनेत्यर्थः । न विद्यते तत्परिधानादिकार्यं यस्य पलाशादेस्तस्य सम्मार्गः क्रियमाणः परिधेरकृतः स्यात्परिधीकृतस्य वा पलाशादेः सम्मार्गः क्रियमाणः परिहितपरिधानस्य प्रकृतावभावादप्राकृतकार्यस्य स्यादित्युत्तरार्द्धं द्विधा योज्यम् ।श्लोकं व्याचष्टे * परिधिरिति*स्रुक्शब्दस्य जुह्वादिपरत्वाद्धोमार्थायाश्च स्रुचो जुहूत्वात् जुहूधारणार्थायाश्चोपभृत्त्वादाज्यावदानापादानभूतायाश्च ध्रुवात्वादादिशब्दोपात्तानां स्रुचामपि कार्येणैव स्वरूपोपलक्षणं तच्चेत्यनेनोक्तम् । नन्वर्थाभिधानकर्मत्वस्याप्रयोजकत्वमात्रहेतुत्वात्किमर्थो ऽपिशब्द इत्याशङ्कानिरासार्थस्ततश्चशब्दः । न केवलं ततो ऽर्थाभिधानकर्मत्वादप्रयोजकत्वं किं तु वक्ष्यमाणयथाश्रुतसम्मार्गानिष्पत्तेश्चेत्यर्थः । ननूभयेषां समुच्चयेन परिधानार्थत्वात्पौर्वापर्याभावेनाप्रकृतार्थत्वानापत्तिरित्याशङ्क्य * न चेत्युक्तम् * अग्न्यर्थत्वाभावे च सम्मार्गस्या-

ङ्गप्रधानहोमार्थाग्निद्वाराङ्गप्रधानहोमार्थत्वाभावेनापबर्हिषः प्रयाजान्यजत्यपबर्हिषावनूयाजौ यजतीति विहितप्रयाजानुयाजाङ्गत्वेन प्राप्त्ययोगादवभृथस्य च दशमे वक्ष्यमाणेनापूर्वत्वेनातिदेशतो ऽपि प्राप्त्ययोगात्कथं चित्प्राप्तावप्यप्स्ववभृथेन चरन्तीति तृतीयोक्तकरणत्वाक्षिप्ताङ्गसाहित्यस्य विवक्षितत्वाच्चरत्युक्तस्य च प्रयोगस्य साङ्गप्रधानविषयत्वादपां च देशत्वात्प्रयोगाङ्गत्वावगतेरेकादशे साङ्गप्रधानार्थाग्निविकारत्वस्य वक्ष्यमाणत्वादग्न्यप्राप्तेरग्न्युदाहरणे ऽपि न सम्यक् प्रयोजनमित्याह * अवभृथस्य त्विति * पुरोडाशोदाहर- ३९३।४
णप्रयोजनमनुजानाति * तरसेति * तरसा उदाहरणं विषयो यस्य प्रयोजनस्येति विग्रहः । ननु तरसोदाहरणे ऽपि पुरोडाशमात्रानुवादेन मांसविधानात्पूर्वपक्षे ऽपि सवनीयपुरोडाशवत्तदङ्गपर्यग्निकरणपुरोडाशे ऽपि मांसप्राप्तेर्न प्रयोजनसत्यतेत्याशङ्क्याह * तत्र हीति * मांसं तु सवनीयानां चोदनाविशेषादिति तृतीयान्त्याधिकरणे पुरोडाशानादरेण सवनीयमात्रे मांसविधेर्वक्ष्यमाणत्वान्न पर्यग्निकरणपुरोडाशे मांसप्राप्तिरित्यर्थः । ननु सवनीयाङ्गभूतस्य पर्यग्निकरणस्यापि सवनाधारत्वे सवनीयशब्दवाच्यत्वात्तदीये ऽपि पुरोडाशे मांसं स्यादित्याशङ्क्याह * न हीति * तादर्थ्याभिप्रायः सम्बन्धिशब्दः मन्द्रं प्रातःसवन इत्यादौ तु सप्तमीनिर्देशात्सवनाधारमात्रे स्वरविधिरित्याशयः । ननु पर्यग्निकरणस्याराादुपकारित्वे प्रकृतौ प्रकृतपुरोडाशग्रहणस्याशास्त्रीयत्वेन विकृतौ व्रीहिमयत्वस्य यवमयत्वस्य वातिदेशायोगादुपादानलाघवाय सवनीयस्य मांसमयस्यैव पुरोडाशस्य पर्यग्निकरणसाधनत्वापत्तिर्न पूर्वसिद्धान्तपक्षयोः प्रयोजनभेदः स्यादित्याशयेनाशङ्कते *तत्रापि त्विति* व्रीहिशब्दो यवानामप्युपलक्षणम्। ननु व्रीहियवनियमाभावे ऽप्यनियतधान्यमांसादिप्रकृतिद्रव्यकतैव पूर्वपक्षे प्रयोजनं भविष्यतीत्येकदेशी शङ्कते *एवं तर्हीति* पर्यग्निकरणपुरोडाशस्यानियतद्रव्यकत्वे प्राप्ते यथैकपात्रभोजिनोर्गुरुशिष्ययोः शिष्यस्य कांस्यपात्रभोजित्वनियमे गुरोश्चानियतपात्रभोजित्वे शिष्यानुरोधेनापि गुरोर्नियमदर्शनादाग्रयणे द्यावापृथिवीयस्यैककपालस्य वैश्वदेवैककपालप्रकृतिकत्वेन प्रसूनबर्हिर्नियमादनियतबर्हिषो मुख्यस्याप्यैन्द्राग्न्यादेरमुख्यानुरोधेनाप्याग्रिकश्च गुणः साधारणो ऽविरोधात्कांस्यभोजिवदमुख्ये ऽपीत्यत्र द्वादशे प्रसूनबर्हिर्नियमो वक्ष्यते । तथा सवनीयपुरोडाशस्य मांसप्रकृतिकत्वनि-

---

१ विकृतित्वेनेत्यर्थः ।

२ अवभृथे प्रधाने ऽग्निविकारः स्यान्न द्वितन्त्वे तुरग्निसंयोग इत्यत्र ।

यमात्पर्यग्निकरणपुरोडाशस्यापि मांसप्रकृतिकत्वनियमापत्तेरेक-
देश्युक्तम् प्रयोजनमाशङ्किता निरस्यति * तदपीति * पूर्वप-
क्षप्रयोजनमाक्षिप्तं परमतेन तावत्समाधत्ते * तस्मादिति * प्रकृतौ
शास्त्रसहकारित्वेनोपादानगौरवभयं कथं चिच्छब्देनोक्तम् । प्रकृतपुरो-
डाशग्रहणस्य प्रकृतौ शास्त्रीयत्वाद्विकृतावतिदेशसम्भवो ऽपि व्रीहि-
मयस्य यवमस्य वा पुरोडाशस्याभावात्पर्यग्निकरणलोपापत्त्या परेषां
समाधानं दूषयति * तत्रापि त्विति * तुल्यो हि व्रीहिसम्बन्धः
शास्त्राद्यागावघातयोरिति वार्त्तिकोक्तन्यायेनाराडुपकारिणाङ्गेन प्र-
धानप्रयुक्तद्रव्यग्रहणस्य निरस्तत्वादयुक्ततापि शब्देन सूचिता । लोप
एव तर्ह्यस्तु पूर्वपक्षप्रयोजनमिति मतान्तरमाह * तेनेति * न-
न्वेकहायन्यानयनस्य सप्तमपदपांसुग्रहणाप्रयुक्तत्वात्तदर्थमनुष्ठाने
ऽप्यक्षाभ्यञ्जनस्य तेनाक्षमञ्ज्यादिति तृतीयोक्ताक्षाभ्यञ्जनशेषत्वात्पां-
सून्प्रति प्रयोजकत्वात्पदपांस्वभावे ऽपि यान्कांश्चित्पांसूनुपादायाक्षा-
भ्यञ्जनस्यानुष्ठानसिद्धेर्लोपाभावादिहाप्युक्तेन न्यायेन पर्यग्निकर-
णस्य पुरोडाशं प्रत्यप्रयोजकत्वलक्षणाभावादेकहायनीन्यायेन पुरो-
डाशोक्ता प्रकृतिव्रीहियवाप्रयोजकत्वे ऽपि यत्किं चिद् द्रव्योपादा-
नेन पुरोडाशसिद्धेः पर्यग्निकरणलोपस्यायुक्तत्वेनैतत्प्रयोजनापरितो-
षात्स्वमतेनानियतधान्यप्रकृतिकपुरोडाशसिद्धेर्व्रीहिमयत्वस्य यवम-
यत्वस्य चातिदेशाभावे ऽपि मांसमयस्य पुरोडाशस्य पूर्वपक्षे पर्यग्नि-
करणानापत्तेर्युक्तं पूर्वपक्षप्रयोजनमिति समाधत्ते * अनियतेति *
यत्वनियमे सति मांसस्यापि पक्षे प्राप्तेः कांस्यभोजिन्यायेन मांसनि-
यमात् सिद्धान्तसदृशकर्मापत्तिरित्युक्तं तन्निरस्यति * न चात्रेति*
विशिष्टाकारस्य पिण्डस्य पुरोडाशशब्दवाच्यस्य मांसेनानिष्पत्तेः पक्षे
ऽप्यप्राप्तिरित्याशयः । ननु सवनीयस्य तर्हि पुरोडाशस्य कथं मां-
सप्रकृतिकतेत्याशङ्कते * सवनीयेति * सवनीयपुरोडाशप्रकृति-
त्वेन न प्राप्तं विधीयते किं तु तत्कार्यसाधनत्वेनेति परिहरति *नै-
वेति * तरसपुरोडाशमन्नसंरोधादिति छान्दोग्यसूत्रकृतान्नमिश्र-
णेन मांसस्य पुरोडाशनिष्पादने सामर्थ्यस्योक्तत्वात्तदनिष्पादने च
चराविव पेषणनिवृत्त्या तदर्थाधिवापनिवर्त्तनेन धान्यमसीत्यधिवा-
पमन्त्रनिवृत्त्यापत्तेर्धान्यशब्दोहानूहचिन्तायाः शाक्यानामयनप्राप्तैत-
न्मन्त्रस्थधान्यशब्दोहानूहप्रयोजनत्वोक्त्ययोगप्रसङ्गात्पुरोडाशस्थाने मां-
सविध्युक्त्ययोगमाशङ्क्य सवनीयशब्देन धानाकरम्भपरिवापपुरोडा-
शपयस्याख्यानां पञ्चानामपि हविषामभिधानात्पुरोडाशशब्दस्य च
लिङ्गसमवायाद्धानादिष्वपि प्रवृत्तेर्भ्रष्टयवानां च धानाख्यानां धा-

नाच्चूर्णस्य दध्यक्तस्य करम्भाख्यस्य परिवापाख्यानां च लाजाना-
मामिक्षाख्यायाश्च पयस्याया मांसेनान्नमिश्रितेनापि निष्पादनाशक्ते-
रेकेन च वाक्येन धानादौ तत्कार्यकरत्वेन पुरोडाशे च तत्प्रकृतित्वे-
न मांसविधानस्य वैरूप्यापादकत्वेनायोगान्मुख्यभूयोधानाद्यनुरो-
धेन पुरोडाशे ऽपि तत्कार्यकारित्वेनैव मांसविधिर्युक्तः छान्दोग्य-
शाखायां त्वेतेन वै गौरवीति शाक्यस्तरसपुरोडाशोपन्यावृत्त्या सर्वा-
मृद्धिमाप्नोदिति परकृतिसरूपार्थवादकल्पे विधौ सवनीयशब्दाभा-
वात्पुरोडाशमात्रोद्देशेन मांसविध्यवगते ऽसहायोपादानेनापि च मां-
सस्य पुरोडाशनिष्पादकत्वसम्भवे पुरोडाशश्रुतेः कार्यलक्षणार्थत्वक-
ल्पनायोगाद् व्रीह्योदनो देवदत्त इति वच्च तरसमयः पुरोडाशो ऽस्ते-
ति मध्यमपदलोपिबहुव्रीह्यर्थाश्रयणेन पदद्वयस्यापि श्रुतिसंस्थिते
ऽहनि गृहपतिर्मृगयातिशयान् मृगान्हन्ति तेषां तरसाः सवनीयाः
पुरोडाशा भवन्तीति पुरोडाशमात्रोद्देशेन मांसाविव गतेः सहायोपा-
दानेनापि च मांसस्य पुरोडाशनिष्पादकत्वसम्भवे पुरोडाशश्रुतेः
कार्यलक्षणार्थत्ववृत्तित्वोपपत्तेः । सूत्रकृतान्नमिश्रेण मांसस्य
पुरोडाशशक्ततोक्ता तद्विषयमेव च धान्यशब्दोहानूहचिन्ता-
प्रयोजनत्वं धान्याधिकरणप्रयोजनभाष्ये तु सवनीयशब्दवद्वाक्यो-
दाहरणमनादृत्यमिति परिहारसूचनार्थम् * यथेत्याद्युक्तम् * कथं
चिच्छब्देनान्नमिश्रिततोक्ता समाहितं पूर्वपक्षप्रयोजनमुपसंहरति *
अतश्चेति * यथा प्रैयङ्गवे चरौ प्रधानमात्रे प्रियङ्गुभिर्व्रीहिनिवृत्ते-
र्व्रीहिसाधनक एवावघात इति दृष्टान्तार्थः । एवशब्दो मांसशङ्कानिवृ-
त्त्यर्थः । एवं तर्ह्यनियतद्रव्यकतेत्यनियमस्य मांसनियमेन निरासा-
न्मांसविषयत्वप्रतीतेरनियतद्रव्यकत्वं वेत्यस्यापि तद्विषयत्वशङ्का-
पत्तेस्तन्निरासेन धान्यमात्रविषयत्वसूचनायैवशब्देन मांसं निरस्य
पुनः*स त्वित्युक्तम्*न चास्मिन्पक्षे नियोगतो यागार्था एवेति न्यायेन
प्रकृतपुरोडाशग्रहणस्य निरस्तत्वात्प्रकृतावपि व्रीहियवद्रव्यकत्वा-
सिद्धेः पूर्वपक्षप्रयोजनत्वेनानादरात् कथं चिद्वेत्युक्तम्*स्वयं प्रयोज- ३९४।३
नान्तराण्याह * एतानि चेति * पुरोडाशोदाहरणे भाष्योक्तप्रयो-
जनानुज्ञासूचनार्थश्चकारः पशौ पृषदाज्येनानुयाजान्यजतीत्या-
म्नानात्पृषदाज्यधारणायोपभृदन्तरकरणाच्चतस्रः स्रुचश्चातुर्मास्येषु
वरुणप्रघासाख्ये द्वितीये पर्वणि पृथगग्निं प्रणयतइति विहारद्वया-
म्नानेन जुहूपभृन्ध्रुवाद्वयकरणात्षट् यत्र च वरुणप्रघासेषु वि-

१ संस्थिते संस्थिते ऽहनि गृहपतिर्मृगयां याति स यान् यान् मृगान् हन्ति स तेषां तरसाः सवनीयाः पुरोडाशा भवन्तीति ।

द्वाराद्वित्वेन षट्संख्यत्वात्परिधिवृद्धिस्तत्रैकवर्जं पञ्चानामसंम्मार्गोपत्तेर्महान्प्रयोजनविशेष इत्यर्थः । अग्निमुपधाय स्तुवतइति स्तुत्यक्तत्वेनारादुपकारके ऽग्न्युपनिधाने विहिते यथा लौकिकस्याग्नेरुपनिधानं विषये लौकिकं स्यात्सर्वार्थत्वान्न वैदिकमर्थनिर्देशादित्यत्र सप्तमाधिकरणे वक्ष्यतइति दृष्टान्तार्थः । अग्निसम्मार्गस्याग्नीन्परिधींश्चाग्निं च त्रिस्त्रिः सम्मृड्ढीति प्रयाजकालीनसम्मार्गप्रैषादग्नीत्परिधींश्चाग्निं च सकृत्सकृत्सम्मृड्ढीति चानुयाजकालीनसम्मार्गप्रैषात्परिधिसम्मार्गसाहित्यावगतेराहवनीयस्यैव परिध्यन्वयेन सम्मार्गावगमात्सर्वैश्च याज्ञिकैराहवनीयस्यैव सम्मार्गानुष्ठानादाहवनीयादीनामित्यादिशब्दो वैदिकत्वसादृश्योपस्थापितपुरोडाशाद्युपसंग्रहार्थः । सर्वशब्दश्च विहारपृथक्त्वेनैकाहवनीयसम्मार्गार्थो कृतकार्याणां चाहवनीयस्रुक्परिधिपुरोडाशानां कृतसंस्कारणामपि नाशदोषापहारेष्वन्येषामुत्पादितानां संस्काराद्वृत्त्यर्थो व्याख्येयः ।

॥ स्तोत्रादिप्राधान्याधिकरणम् ॥ ५ ॥

## स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १३ ॥

ननु स्तोत्रशस्त्रयोः पूर्वाधिकरणोक्तगुणकर्मत्वहेतुद्वितीयाश्रुत्यभावात्कथं गुणकर्मत्वशङ्केत्याशङ्क्याह * यैस्त्विति * दृष्टोपकारित्वस्य स्वातन्त्र्येण गुणकर्मलक्षणत्वानभ्युपगमे ऽप्यपूर्वाभावोपयोगिलक्षणत्वस्यान्यतः सिद्धशेषाणामित्यत्रोक्तत्वादिहापूर्वाभावः प्राप्तो ऽपोद्यतइत्याशयः।सूत्रगतस्तुतशस्त्रशब्दव्याख्यानार्थं गुणवचनमितिभाष्यं व्याचष्टे * स्तुतिरिति * गुणमात्राभिधानस्य स्तुतित्वं भाष्यकृतोक्तमिति शङ्कां निराकर्त्तुमाह * गुणेति * गुणानां गुणिसम्बन्धितया वचनमिति भाष्यार्थो ऽनेनोक्तः । नन्वभिधानस्य स्तुतित्वे तस्यैकान्तेनाभिधेयशेषत्वात्प्राधान्यसिद्धान्तायोगात् सन्देहो न स्यादित्याशङ्क्याह * सा चेति * अभिधेयं विना ऽभिधानानिष्पत्तेरभिधेयाभिधानारहितशब्दोच्चारणापातात् स्तुतित्वं हीयेतेत्यर्थः । नन्वेवं सति गुणगुणिनावुभावपि प्रतिस्तुतेः शेषिशेषिभावोपपत्तेर्गुणिनीं देवतामेव प्रतिगुणप्रधानभावचिन्ता न युज्येतेत्याशङ्क्याह * तत्रेति * मण्डूकाक्षादेरदेवतात्वे ऽप्यग्निराजसूयादौ विनियुक्तत्वेन स्तुतेस्तच्छेषत्वस्य पूर्वपक्षाभिमतत्वात्सन्देहभाष्यगतस्य देवताशब्दस्य स्तुत्यमात्रोपलक्षणार्थत्वसूचनाय * स्तुत्यस्येत्युक्तम् * स्तुत्यं

प्रति स्तुतेः साध्यत्वात्स्वभावतो शेषत्वे ऽपि कैमर्थ्याकाङ्क्षायां शेषत्वं भवतीति सूचनार्थः शेषीति च्विप्रत्ययः। पूर्वपक्षसूत्रव्याख्यानार्थं तत्रेति भाष्यं सङ्क्षेपतो व्याचष्टे * किमिति *

अर्थे न त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ १४ ॥

ननु यत्रेति वार्थवत्त्वात्स्यादिति सूत्रे पूर्वपक्षिणोत्कर्षस्याभ्युपेष्यमाणत्वादनिष्टापत्तिर्दोषाभिधानमयुक्तमित्याशङ्क्याह * प्रमा- ३९५।२
णेति * क्रमसन्निधाख्यप्रमाणद्वयविरोधो ऽनेन सूत्रेण पूर्वपक्षे ऽभिधीयते नानिष्टापत्तिरित्यर्थः । नन्वाम्नातेष्विति वक्ष्यमाणानर्थक्यापत्तिदोषान्तरसूचनार्थस्तावच्छब्दः कीदृक्दूषणमित्यपेक्षायामाह * तथा हीति * यस्मात् संस्कारकर्मत्वे यत्र स्तोत्रे अविद्यमानार्थो मन्त्रः प्रयुज्यते तस्य स्तोत्रस्य मन्त्रप्रकाश्येन देवतारूपेणार्थेन स्तोत्रप्रयोजनेनापकृष्टत्वात् क्रमसन्निधिप्राप्तस्याविद्यमानार्थमन्त्रसाध्यस्य स्तोत्रस्य बाधः प्रसज्यतइति यस्माच्छब्दार्थे यदित्यव्ययं व्याख्येयम् । स्तौतिशंसतिवाक्यविहिताया अपि स्तुतेर्मन्त्रविशेषसाध्यत्वं विना विशेषरूपानवधारणेन देवतासंस्कारत्वायोगान्मन्त्रापकर्षेण भाष्यकृता स्तुत्यपकर्षस्याप्युक्त्यवगतेः स्तुत्या एव च संस्कारत्वनिमित्तापकर्षस्य वक्तुं युक्तत्वाच्चोदनाशब्देन च स्तुत्यपकर्षस्यैव सूत्रकृतोक्तत्वात् स्तोत्रस्यापकृष्टत्वादित्युक्तं तस्मात्संस्कारपक्षो दुष्ट इति शेषः। उक्ते ऽर्थे यथापूर्वं भाष्यं,सूत्रं योजयति *येति* को ऽपकर्षे दोष इत्याशङ्कानिरासार्थं तत्रेति भाष्यं व्याचष्टे * ततश्चेति * ननु क्रमसन्निधिशब्दयोः स्थानाख्यपञ्चमविनियोगप्रमाणवाचित्वेनैकार्थ्याद्भेदोपादानमयुक्तमित्याशङ्क्याह * क्रमश्चेति * येन क्रमेण यजुर्वेदे ग्रहयागाभ्यासा विहितास्तेनैव क्रमेण सामवेदे तदङ्गभूतानि स्तोत्राणि ब्राह्मणेन विहितानि तेनैव च क्रमेणोत्तराग्रन्थे स्तोत्रसाधनभूता ऋचः पठिताः मन्त्रानपेक्षायाः स्तुतेरपकर्षायोगात् स्तुत्यपकर्षेण मन्त्रापकर्षे ऽपि लक्षणान्मन्त्रक्रमाभिधानविरोधः रथन्तरं पृष्ठं भवतीति चोदनया रथन्तरयोनित्वेनाभित्वा शूरेत्यृगुपस्थापनमेकं साम तृचे क्रियते स्तोत्रियमिति च स्तोत्रसाधनभूतस्य साम्नस्तृचाधारत्वश्रुतेः। ऋगन्तरापेक्षायां यद्योन्यां गायति तदुत्तरयोर्गायतीति योन्युत्तरर्गपेक्षया त्रित्वपूरणविधानादुत्तराग्रन्थे च तदुत्तरत्वेन नत्वावानित्यृचः पाठादुपस्थापनं त्रित्वपूरणं तु तयोः

पूर्वा बृहती ककुभावुत्तरे इति वचनात् प्रथमायाश्चतुर्थपादेन द्विती-यायाश्चार्द्धर्चेनैकं ककुभं कृत्वा द्वितीयायां द्वितीयादिपादत्रयेणापरां कृत्वा प्रगाथसंज्ञा यावृत्त्या भविष्यतीति भाष्यकृता प्रगाथशब्देन सूचितम् । एवं तु क्रमहेतुकोपस्थापनमात्रवाचित्वात्सन्निधिशब्देन च प्रमाणान्तरानभिधानापत्तेः क्रमसन्निधी उपरुध्येयातामिति द्वि-वचनानुपपत्तिप्रसङ्गादपरितोषेण प्रकरणपरामर्शो वेत्युक्तम् । प्रक-रणाच्चैन्द्रस्य प्रगाथस्य ज्योतिष्टोमाङ्गत्वे ऽवगते ऽपि द्वारविशेषा-पेक्षायां पृष्ठाख्यस्तोत्रद्वारत्वं क्रमादवगम्यतइत्याशयः । प्रकरणेन क्रि-यारूपस्य मन्त्रस्येतिकर्त्तव्यतात्वेनाग्रहणे ऽपीतिकर्त्तव्यताभूतस्तोत्र-साधनसामाधारत्वेन सन्निधिं परामृश्य ग्रहणात्साकाङ्क्षफलवत्सन्नि-धानलक्षणप्रकरणावयवभूतो ऽत्र सन्निधिर्विवक्षित इति सूचनार्थः परामर्शशब्दः ।

## वशावद्वा गुणार्थं स्यात् ॥ १५ ॥

न पर्युदसिष्याम इति भाष्यात् पूर्वपक्षसमर्थनायैतत् सूत्रमित्या-भाति तत्पूर्वपक्षिणो ऽप्युत्कर्षस्याभिमतत्वादयुक्तमाशङ्क्य पूर्वपक्षैक-देशी प्रमाणविरोधाख्यं दोषमनेन सूत्रेण परिहरतीति व्याख्यातुमा-ह * नायमिति * प्रश्नपूर्वं दोषपरिहारमुपपादयति * किमिति * श्लोकं व्याचष्टे * य एवेति * संन्निहितातिक्रममात्रवाचित्वेनोत्क-र्षापकर्षशब्दयोरैकार्थ्यादपकृष्येतेत्युक्तस्योत्कर्षशब्देनानुभाषणाविरो-धो ऽपकर्षः स्यादित्यनेन सूचितः । नन्वैक्ये ऽपीन्द्रमाहेन्द्रयोर्माहेन्द्रं ग्रह गृह्णातीति महत्वगुणविशिष्टस्य देवतात्वश्रुतेः । शुद्धप्रकाशकस्य मन्त्रस्यापकर्षः स्यादित्याशङ्कानिरासार्थत्वे यथा वशात्वगुणविशिष्ट-स्याप्यजाद्रव्यस्यागुणार्थं शुद्धाजाप्रकाशनार्थमभिधानं स्यादेव न त्व-यमपकृष्यते तथा शुद्धेन्द्रप्रकाशनार्थमप्यभिधानं स्यादेवेत्यकारप्र-श्लेषेण सूत्रव्याख्यां सूचयति * न चेति * उत्तरसूत्रव्याख्यानार्थे भाष्ये गुणश्चानर्थकः स्यादित्यत्र च सूत्रे गुणस्य देवतात्वानन्तर्ग-तिनिरासाद्वशावद्वेति वाशब्देन गुणस्य देवतात्वे ऽनन्तर्गतिः सूचि-तेति ये मन्यन्ते तन्मतेन गुणस्यातन्त्रत्वादित्युक्तम् । आपाद्यापि तु निरासोपपत्तेर्वशादृष्टान्तात्तद्वशगुणे चोदित इतिभाष्याच्च गुणस्य दे-वतात्वान्तर्गतिः । तद्विरुद्धाया निरुपपत्तिकायाश्चानन्तर्गतिः । श-ङ्कितुमशक्यत्वात्स्वमतेनान्तर्गतस्यापि गुणस्य महत्वविशिष्टदेवताप्र-करणेन लभ्यमानस्मरणत्वादित्युक्तं निर्गुणशब्देनाकारप्रश्लेषो गुणा-र्थमिति सूत्रावयवे सूचितः । वशात्वगुणस्यातन्त्रत्वाभावात् अन-

न्तरपक्ष एव दृष्टान्तः। ननु शब्दमात्रस्य देवतात्वादिन्द्रमहेन्द्रशब्दयोश्च भेदात्कथं देवतैक्यमित्याशङ्क्याह * न चेति * नवमे ऽपि चाशब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिरितिसूत्रे भूतभव्यसमुच्चारणन्यायेन देवता यागं प्रति गुणत्वे ऽभिहिते ननु कर्मणो ऽपीप्सितादभिप्रेतत्वं देवताया गम्यतइत्याशङ्क्य नास्या अभिप्रेततामङ्गनुमहे तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यादभिप्रेततागम्यत इति भाष्येणानर्थकवर्णमूहस्य प्रातिपदिकत्वाभावे तद्धितचतुर्थीसंयोगायोगात्तत्संयोगाभिधानेनार्थग्रहणेन शब्दमात्रस्य देवतात्वं निरस्तम्। दशमे च विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदनेत्यत्रावाहनादौ येन केन चित्पर्यायेण देवताभिधानसिद्धेर्विधिगताग्न्यादिशब्दानादर इति पूर्वपक्षयित्वा आग्नेयो ऽष्टाकपाल इति विधिगतेनाग्निशब्देन देवताया हविःसम्बन्धविधानात् मन्त्रकार्ये देवतोद्देशे विधिगतस्यैव शब्दस्योच्चारणं कार्यमिति सिद्धान्तिते का पुनरियं देवतानामिति पृष्ट्वेन्द्रादीनां द्युस्थानां यत्र वा वेदे ऽग्निर्देवता वा ऽतो देवतेत्यादिर्देवताशब्दः प्रयुक्तः सा देवतेति परमतद्वयमहःशार्दूलादीनामनुपसंग्रहापत्तेर्निरस्य स्वमतेन सूक्तभाजो हविर्भाजश्च देवता इति भाष्येणाग्निदैवत्यं सूक्तमग्निदैवत्यं हविरित्यादिप्रयोगादाहुतिभाजो वा अन्या देवता अन्याः स्तोमभाजः छन्दोभाजश्चेति लिङ्गाच्च सूक्तस्तुत्यत्वस्य त्यज्यमानहविरुद्देश्यत्वस्य च देवतात्वाभिधानादर्थस्यैव स्तुत्यत्वोद्देश्यत्वावगतेर्मूर्त्तानाममूर्त्तानां चेतनानामचेतानानां च श्रुत्या कं चिदर्थं प्रति तादर्थ्येन सङ्कल्पनीयानां देवतात्वं भविष्यतीति च भाष्येण मूर्त्तानां चेतनानां देवतात्वाभिधानाद्यस्य वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामीति सङ्कल्पः क्रियते सा भवतीति च भाष्येणोच्चारणार्थत्वाद्विशेरुच्चार्यमाणेन शब्देन प्रजापतिं मनसा यजेतेत्यादिविधौ वा स्मर्यमाणेन वाच्यस्य देवतात्वाभिधानात् नन्वेवं सति सुतरां च येन केन चिदग्निशब्देन निर्देशः करणीय इति वाशङ्क्य भवेदेवं यद्यग्निशब्दो ऽग्निप्रत्यायनार्थमुच्चार्येतापि तु हविः सम्बद्धार्थं प्रत्याय्येतेत्युपक्रम्य देवतायाश्च यज्ञसाधनभावेन रूपेण भवति केन तर्हि सम्बन्धिना शब्देनेत्यादिना भाष्येण शब्दसम्बन्धितद्व्यतिरिक्ताभिधानाच्छब्दस्य देवतात्वं निरस्तं भवति। नन्वर्थस्यापि देवतात्वे कथमैक्यनिश्चयो ऽत आह

* ततश्चेति * प्रमाणविरोधाख्यदोषपरिहाराशङ्कामुपसंहरति ३०६॥१

* तस्मादिति *

## न श्रुतिसमवायित्वात् ॥ १६ ॥

नञर्थव्याख्यानार्थं नैतदितिभाष्यं व्याचष्टे * नेति * इन्द्रो ऽस्येत्यादिभाष्यं तद्धितश्रुत्याश्च कर्मण्यादिवदवयवार्थानपेक्षस्य महेन्द्रस्य ग्रहसमवायेनेन्द्राङ्गेदावगमादित्येवं श्रुतिसमवायित्वादिति सूत्रावयवव्याख्यानार्थतया परमतेन दूषयितुं प्रश्नपूर्वं व्याख्यातुमुपक्रमते * कुत इति * श्लोकं व्याचष्टे * यदीति * नन्ववयवार्थप्रत्यभिज्ञानात्समुदायशक्तिकल्पनानुपपत्तेः कथं तद्बलीयस्त्वमित्याशङ्क्याह * तथा हीति * ततो वाक्यभेदादिः स्यात् तच्च दुष्यतीत्यर्थः । आदिशब्देनासमर्थतद्धितसामासापत्तिरुत्तरपदवृद्धिप्रयुक्तिर्महत्वस्येन्द्रविशेषणत्वानुपपत्तिश्चोक्ता अनेन च महत्व विशिष्ट इत्यन्तं भाष्यं तात्पर्यतो व्याख्यातं महेन्द्रशब्दास्तु इत्युत्तरार्द्धेनावयवव्युत्पत्तिनिरासे भाष्यं योजयितुमुपक्रमते * न चेति * व्युत्पत्तिशब्देनेन्द्रो महत्वविशिष्टो ऽस्येत्यध्याहारेण पूर्वावयवव्याख्या सूचिता कथमनेन भाष्येणावयवव्युत्पत्तिनिराक्रियेत्यपेक्षायां प्रश्नपूर्वकमुपक्रमते * कथमिति * श्लोकं व्याचष्टे * समर्थ इति * समर्थः पदविधिरिति सूत्रात्समासवृत्तौ सामर्थ्यं विशेषणं समर्थानां प्रथमाद्वेत्यस्मात्तद्धिते ऽपीत्यर्थः। कथमत्र सामर्थ्याभाव इत्यपेक्षायां तद्धितसमासवृत्ती युगपत्स्यातां क्रमेण वेति विकल्प्य यौगपद्यपक्षे वृत्तिद्वये ऽपि सामर्थ्याभावप्रतिपादनार्थं न चास्येति भाष्यं व्याख्यातुं सामर्थ्याभावं प्रति जानीते * यदि चेति * एतदुपपादनार्थत्वेन प्रश्नपूर्वं भाष्यं व्याचष्टे * कुत इति * उत्तरार्द्धेन तद्धितसंयोगापेक्षस्य वा या महत्वसम्बन्धात्समासकल्पना सा नोपपद्यतइति नञानुषङ्गेणोत्तरावयवो व्याख्यातः । ननु सामर्थ्याभावं प्रतिज्ञाय सम्बन्धाभावोपपादनमसम्बद्धमित्याशङ्क्याह
३९७।२ * एकार्थीभावेति * समित्युपसर्गस्यैकीभाववाचित्वादैकार्थ्यं तत्कारणं चार्थान्तरानपेक्षत्वं सामर्थ्यं तदेव भाष्यकृतः शब्दसम्बन्धहेतुत्वात्सम्बन्धशब्देनाभिप्रेतमित्याशयः। सापेक्षत्वस्यैकार्थ्यलक्षणसामर्थ्यविहन्तृत्वं तावत्प्रश्नपूर्वकमुपपादयति * कथमिति * श्लोकं व्याचष्टे * अविक्षिप्यमाणौ हीति * विशेषणविशेष्यभूतयोरर्थयोरेकस्मिन्विशिष्टरूपे ऽर्थे लोलीभावात् प्रधानचलनाद्व्यापारात्समासवृत्तिस्तद्धितवृत्तिर्वा भवति । विविधं च क्षिप्यमाणयोरन्यत्र व्याप्रियमाणयोरर्थयोस्तात्पर्यनानात्वनिमित्तात् बुद्धेः सन्दिग्धत्वरूपात्कालुष्यात् दुष्टयोर्नैकास्मिन्नर्थे व्यापारः सम्भवतीत्यर्थः । ननु तात्प-

येनानात्वोपपत्तेः कथं सन्दिग्धत्वरूपकालुष्यापत्तिरित्याशङ्क्य सकृदुच्चरितस्यानेकतात्पर्यायोगं लोकप्रसिद्धमुदाहरति * यो हीति * अतः सकृदुच्चरितस्येन्द्रशब्दस्यानेकतात्पर्यायोगात् किं विशेषणेन महत्वेनान्वयोऽस्तु विशेष्येण वा तद्धितार्थेन ग्रहेणेति सन्देहापत्तेनैकार्थ्यलक्षणं सामर्थ्यं भवतीत्युपसंहरति *इत्येवमिति * व्यपेक्षालक्षणसामर्थ्यविहन्तृत्वं तु सापेक्षस्यातिस्पष्टमित्याह * व्यपेक्षा पुनरिति * श्लोकं व्याचष्टे * न हीति * व्याख्यातं भाष्यार्थमुपसंहरति * इतीति * पूर्वोत्तरभाष्ययोर्विषयविवेकार्थं पूर्वभाष्यस्य युगपद्वृत्तिद्वयनिरासपरत्वमाह * एवं तावदिति * दोषः समर्थतद्धितस्य समासापत्तिरूपः। न चेत्युत्तरभाष्यं क्रमेण वृत्तिद्वयनिरासपरतयार्थतो व्याचष्टे * क्रमेणेति * वक्ष्यमाणाद्वैरूप्यलक्षणादनेकार्थविधिलक्षणाच्च वाक्यभेदाद्विवेकायावृत्तिलक्षणवाक्यभेदाभिधानार्थत्वमस्य भाष्यस्य वक्तुम् * असकृदित्युक्तम् * असकृच्छ्रुतिं विवृणोति * कृत्वेति * महांश्चासाविन्द्रश्चेति विग्रहे महेन्द्र इति समासं कृत्वा तद्धितान्वये क्रियमाणे महानिन्द्रोऽस्य देवतेति व्याख्यानार्थं महदिन्द्रशब्दयोरावृत्तिप्रसङ्ग इत्यर्थः। समासशब्देन तद्धितस्याप्युपलक्षणादिन्द्रोऽस्य देवतेति विग्रहे ऐन्द्र इति तद्धितान्तत्वं कृत्वा समासे क्रियमाणे महांश्चासावैन्द्रश्चेति व्याख्यानायैन्द्रप्रातिपदिकतद्धितयोरावृत्तिः स्यादिति सूचितम्। ननु न वाक्यभेदोऽस्माद्भाष्यात्सम्प्रतीयतइत्याशङ्क्याह * एतदेवेति * क्रमेण वृत्तिद्वयनिरासस्य हेत्वाकाङ्क्षायां योग्यत्वाद्वाक्यभेदो हेतुत्वेन भाष्यकृतोऽभिप्रेतोऽवसीयतइत्याशयः। तद्धितपूर्वत्वेऽन्यदपि दोषद्वयं भाष्यकृतोऽभिप्रेतमित्याह * तद्धितेति * श्लोकं व्याचष्टे *महेन्द्र इति* वाक्यभेदमात्राभिधानं तर्हि कथमित्याशङ्क्याह * न चेति * समासपूर्वत्वे तदेवैकं दूषणमित्याशयः। कृत्वासमासमिति समासशब्देनाप्येतदेव सूचितम्। एतस्मिन्नेवेति युगपद् वृत्तिद्वयाशङ्काभाष्यं यौगपद्यपक्षस्य प्रागेव निरस्तत्वाद्दोषान्तराभिधित्सया वा पुनरुपन्यासे क्रमवृत्तिनिरासव्यवधानादयुक्तमाशङ्क्य व्याचष्टे * तेनेति * तद्धितसमासवृत्त्योः कापूर्वेत्यनिश्चयेन क्रमायोगाद्यौगपद्यमेव वृत्तिद्वयवादिना वाच्यम्। क्रमस्त्वनादरणीय एवेति सूचनार्थं क्रमनिरासोत्तरकालं पुनर्यौगपद्यस्योपन्यासपूर्वकं निरास इति प्रतिपाद्येति ल्यपा दर्शितम्। न चायमिति वैरूप्यलक्षणदोषाभिधानार्थं भाष्यं व्याचष्टे * ऐकशब्द्य इति * ३९८।१
महत्वं प्रतीन्द्रशब्दस्यानुवाद्योद्देश्यप्रधानभूतार्थवाचित्वात्तद्धितार्थं

च प्रति विधेयोपादेयगुणभूतार्थवाचित्वाद्वैरूप्यं विस्पष्टश्चेत्यनेकार्थविधिदोषाभिधानार्थं भाष्यं व्याचष्टे * विधीति * एकविधानेन चेतरानाक्षेपात्प्रत्ययावृत्तिरप्यनेकार्थे विधौ स्यादित्येवमर्थत्वेन सकृदुच्चारणे चेति भाष्यं व्याचष्टे * तथा हीति * तस्मादित्यवयवव्युत्पत्तिनिरासोपसंहारभाष्यमकारप्रश्लेषणाध्याहृतशुद्धं कथं तर्हि शब्दैकवाक्यभेदेन वा स्वमतेन व्याख्यास्यमानत्वात्परमते ऽपि तच्छङ्का प्रसज्यमानां निराकर्त्तुं यथास्थितं पठति *तस्मादिति* नन्ववयवव्युत्पत्त्यनभ्युपगमे समासत्वाभावादर्थान्तरे चागृहीतसम्बन्धत्वेनार्थवत्त्वायोगात्प्रातिपदिकत्वाभावेन तद्धितानुत्पत्तिः स्यादित्याशङ्क्याध्येतृप्रयुक्ततद्धितान्यथानुपपत्त्यैव प्रातिपदिकत्वं कल्पयित्वा तत्सिद्ध्यर्थं समासार्थयोगेनावयवार्थवत्त्वसम्बन्धग्रहणाभावेनार्थविशेषानवधारणे ऽपि कश्चिन्महेन्द्रप्रातिपदिकस्यार्थो ऽस्तीति सामान्यतः कल्पयिष्यतइत्यभिधानार्थं महेन्द्रशब्दादित्यादिभाष्यं व्याचष्टे * किं तर्हीति * व्युत्पत्तिनिरासप्रयोजनाभिधानार्थं तस्मादितिभाष्यं व्याचष्टे * ततश्चेति * नन्विन्द्रस्य वृत्रवधोत्तरकालं महत्वयोगेन यन्महानिन्द्रो ऽभवत्तन्माहेन्द्रस्य महेन्द्रत्वमिति महेन्द्रशब्दवाच्यत्वश्रुतेः समुदायशक्तिकल्पना न युक्तेत्याशङ्कानिरासार्थं यदपीत्यादिभाष्यं व्याचष्टे * न चेति * रूढित्वोपपादनार्थत्वमस्य भाष्यस्य दर्शयितुम् * अत इत्युक्तम् *

व्यपदेशाच्चेति[1] ॥ १७ ॥

सूत्रोक्तेनेन्द्रमहेन्द्रयोर्भेदापदेशेन हेतुना श्रुतिसमवायित्वहेतुसाध्याया महेन्द्रस्यागुणार्थं शुद्धेन्द्रप्रकाशनार्थमभिधानं न सम्भवतीति प्रतिज्ञायाः साधयितुमशक्यत्वाद्देवताभेदप्रतिज्ञां पूर्वहेतोरवान्तरसाध्यत्वेन विवक्षितामस्मिन्हेतावध्याहारेण योजयितुमाह * व्यपदेशेति* विशब्दव्याख्यानार्थम् *भेदादित्युक्तम् * कथं व्यपदेशस्य देवताभेदहेतुतेत्यपेक्षायामाह*एवमिति *समुदायस्त्वदृष्टार्थत्वापत्तेरयुक्त इत्याह * असति चेति * देवताभेदोपपादनस्य प्रकृतोपयोगमनुसन्धत्ते * तस्मादिति * एतद्व्याख्यानमतिप्रसङ्गापादनेन तावद् दूषयति * एवमिति * तद्धिते सति समासपदस्योक्तप्रकारेण रूढित्वे व्याख्यायमाने सर्वेषामग्नीषोमीयादीशब्दानां रूढित्वापत्तेर्द्विदेवताभिधायित्वं न स्यादित्यर्थः । एवं शब्दार्थं प्रपञ्चयन् श्लोकं व्याचष्टे * यथैव हीति * द्वन्द्वसमासस्येतरेतरयोगवा-

१ व्यपदेशभेदाच्चेतिक्व चित् पुस्तके पा० ।

त्वित्वादग्नेरपि सोमसापेक्षत्वे द्वयोश्च तद्धितान्वयाविशेषे ऽप्युप-
लक्षणार्थं सोमस्याग्निसापेक्षत्वे तद्धितानन्वयाभिधानम् । सोमपद-
स्याग्निनाग्निपदस्य वा सोमेन तुल्यकक्ष्यार्थत्वात्तद्धितार्थं च प्रति
विशेषणीभूतार्थत्वाद्वैरूप्यं सोमपदोक्तिरूपलक्षणार्था । नन्वग्नीषोमा-
दिशब्दानां न्यायेन रूढित्वावसायाद्याज्ञिकव्यवहारस्य भ्रान्तित्वेनो-
च्छेदो न दोषायेत्याशङ्क्याह * न चेति * न केवलं याज्ञिकानां ३९९।१
द्विदेवत्यत्वव्यवहारः किं तु मिमांसायामपीत्यर्थः तार्त्तीयांस्तावत्
द्विदेवत्यव्यवहारानुदाहरति * तद्यथेति * आग्नेयं चतुर्द्धा करो-
त्याग्नेयशब्देन सापेक्षाग्निदेवत्ययोरैन्द्राग्नाग्नीषोमीययोः पुरोडाश-
योरग्रहणं व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था
गुणश्रुतिरिति चतुर्द्धाकरणविचारतृतीयप्रथमे सिद्धान्तसूत्रे वक्ष्य-
ति एकस्मिन्वा देवतान्तराद्विभागवदितीन्द्रपीतविचारासिद्धान्तसूत्रे
चेन्द्रपीतसमासस्थेनेन्द्रशब्देन सापेक्षेन्द्रदेवत्यस्यैन्द्राग्नादेः सोम-
स्याग्रहणं वक्ष्यति । एकस्मिन्नेकसंयोगादिति पूषाप्रपिष्टभागाविचा-
रे च पूषशब्देन सापेक्षपूषदेवत्यस्यैन्द्रापौष्णादेश्चराग्रहणं वक्ष्यती-
त्यर्थः। रूढित्वे चैकदेवतात्वापत्तेः सापेक्षत्वं न युज्येतेत्याह * रूढि-
त्वं हीति * आष्टमिकं द्विदेवत्यव्यवहारमुदाहरति * तथेति *
ऐकार्थ्याद्वा नियम्येत पूर्ववत्वाद्विकारो हीति सूत्रे द्विदेवत्यानां
दार्शपौर्णमासिकद्विदेवत्ययागप्रकृतिकत्वं वक्ष्यतइत्यर्थः । नावमिक-
मुदाहरति * तथेति * आशासानामेधपतिभ्यो मेधमित्यध्रिगुप्रैष-
गतमेधपतिशब्दे देवता तु तदाशाब्दात्सम्प्राप्तत्वात्स्वामिन्यनर्थिको
स्यादिति सूत्रे मेधशब्दव्याच्यस्य पशोः स्वामिन्यस्य सम्बन्धस्य
प्राप्तत्वेनाशासानानर्थक्यापत्तेर्देवतैव मेधपतिरिति मेधपतित्वं स्वामि-
देवत्यस्योत्पाद्यसूत्रगतमेधपतित्वशब्दस्य स्वामिनो वेत्यनन्तरसूत्रे
ऽनुषक्तस्य लुप्तभावप्रत्ययस्यानुषङ्गेण द्विवचनान्तमेधपतिव्याच्यम-
ग्नीषोमाख्यदेवतारूपमर्थद्वयमाश्रयिष्यतइत्यर्थः । दाशमिकमुदाह-
रति * तथेति * मनोतायां तु वचनादविकारः स्यादित्यत्र त्वं ह्य-
ग्ने प्रथमो मनोतेति मनोताख्यो मन्त्रो ऽन्यदेवत्यपशावूहितव्यो न
वेति सन्देहमुपन्यस्य ननु प्रकृतावन्यार्थो ऽयं निगदो यदग्नीषोमौ
हि प्रकृतौ देवता ऽयं वाग्नेयो ऽर्थतो सम्भवेनाभिधायित्वादविकारेण
प्रयोक्तव्य इत्याशङ्किते सत्यग्नीषोमौ देवताप्रकृतावित्युक्त्वा यौ तु
तावग्नीषोमाविति भाष्यकृद्वक्ष्यति व्याकरणशास्त्रे ऽपि द्विदेवत्य-
त्वव्यवहारो ऽस्तीत्याह * तथेति * देवता द्वन्द्वे चेत्यधिकृत्येदग्नेः

१ स्वामिन्ये वार्थकामः स्यादिति ।

सोमवरुणयोरिति सोमशब्दे वरुणशब्दे च परभूते ऽग्निशब्दस्य देवताद्वन्द्वनिमित्तमीत्वं स्मृतं मूर्द्धन्याधिकारे चाग्नेः स्तुत्स्तोमसोमा इत्यत्राग्निशब्दात्परस्य सोमशब्दस्य मूर्द्धन्यादेशेन षत्वस्मृतेः । सोमशब्दस्याग्निशब्दाद्भेदावगमादर्थाद्देवताद्वन्द्वावगतिरादिशब्दात् पूर्वपदप्रकृतिस्वराधिकारे उभे वनस्पत्यादिषु युगपदित्यनुवर्त्तमाने देवता द्वन्द्वे चेत्यनेनेन्द्रासोमाविन्द्रावरुणावित्यादिषूभयपदप्रकृतिस्वरत्वं वृद्ध्यधिकारे च हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्यनुवर्त्तमाने देवता द्वन्द्वे चेत्याग्नावैष्णवादिशब्दे उभयपदवृद्धिः आनङ्कृतो द्वन्द्वइति वानुवर्त्तमाने देवताद्वन्द्वे चेत्यानङादेशः।ननु व्याकरणस्यार्थे तात्पर्याभावान्न ततो द्विदेवत्यत्वावधारणं भवतीत्याशङ्क्याह * यदि चेति * तद्धितोच्चारणे देवतात्वप्रतीतेस्तदभ्युपगमे द्वित्वमपि प्रतीत्यविशेषादभ्युपगन्तव्यमित्याह * अथेति * ननु वाक्यभेदादिदोषापत्तेः समासस्यार्थरहितस्यान्वाख्यानात्समासकार्यस्वरलक्षणशब्दसंस्कारमात्रसिद्ध्यर्थं तद्धितान्तेषु शब्देषु द्वन्द्वस्मृतेः प्रामाण्यं कल्प्यते न द्विदेवत्यत्वसिद्ध्यर्थमित्याशङ्क्याह * एतेनेति * एतेनार्थद्वयावगमेन हेतुना स्वरसंस्कारमात्रसिद्ध्यर्थत्वकल्पना न युक्तेत्यर्थः । अश्वकर्णादिवैषम्यमुपपादयति * तथा हीति * नन्विन्द्रे ऽपि महत्वगुणयोगस्य प्रमाणान्तरेणासंवादान्महेन्द्रशब्दे ऽपि समासान्वाख्यानं स्वरसंस्कारमात्रार्थं स्यादित्याशङ्क्याह *महदिति * महाब्राह्मण इत्यादौ महच्छब्दस्य पूज्यत्वाख्यगुणवाचित्वावगमादिन्द्रशब्दस्य च स्तवनीयसूक्तादिना देवताविशेषवाचित्वावगमादवयवयोरर्थवत्त्वं विशेषणविशेष्यरूपार्थवाचित्वं च तावत्सिद्धमेवेत्यर्थः । नन्वेवमपीन्द्रे महत्वगुणयोगे प्रमाणाभावाद्विशिष्टवाचिता महेन्द्रशब्दस्य न युक्तेत्याशङ्क्याह * तत्रेति * निर्दोषक्लृप्तावयवार्थशब्दप्रयोगान्यथानुपपत्तिरेवेन्द्रमहत्वगुणयोगे प्रमाणमित्याशयः । न चाश्वकर्णादिवद्योग्यानुपलब्धिर्विशिष्टार्थबुद्धेर्बाधिकात्रास्तीत्याह * न चेति * ननु समुदायप्रसिद्धिरेवावयवप्रसिद्धेर्बाधिका भविष्यतीत्याशङ्क्याह * न चेति * समुदायशक्तिकल्पनाहेतोरवयवार्थाभावस्यानिश्चयात्समुदायप्रसिद्धेरात्मलाभानुपपत्तेर्बाधकत्वं न सम्भवतीत्यर्थः । नन्ववयवार्थाभावानिश्चये ऽपि सद्भावस्याप्यनिश्चयात् समुदायप्रसिद्ध्यात्मलाभो भविष्यतीत्याशङ्क्याह*
५००।२ न चेति * अन्यथानुपपत्तिलभ्यत्वाच्छक्तेरवयवार्थाभावानिश्चये ऽन्यथानुपपत्तेरनिश्चयान्न शक्तिकल्पना शक्येत्याशयः । अतिक्लेशापत्तेरपि शक्त्यन्तरकल्पना न युक्तेत्याह * किं चेति * श्लोकं

व्याचष्टे * प्रत्यक्षे ऽपीति * परव्याख्यादूषणमुपसंहरति * तस्मादिति* ननु क्रमेण युगपद्वा वृत्तिद्वययोगादवयवव्युत्पत्तिर्न सम्भवतीत्युक्तमत आह * न चेति* क्रमवृत्तावसामर्थ्यं परेणानुक्तमपि तद्धितपूर्वत्वे वस्तुतो ऽसामर्थ्यात्समासपूर्वत्वे ऽप्यसामर्थ्यशङ्कापत्तेस्तन्निरासार्थं निरस्तं समासवेलायामिन्द्रशब्दस्य तद्धितापेक्षत्वे ऽपि प्राधान्यात् सामर्थ्याविघातः तद्धितवेलायां च समासार्थेनैव तद्धितान्वयात्तद्व्यतिरिक्तस्याचार्थस्यापेक्षणीयस्यानुपादानान्नासामर्थ्यापत्तिरित्यर्थः। यस्त्वस्मिन्पक्षे महदिन्द्रशब्दयोरुच्चारणावृत्त्यापत्तेर्वाक्यभेद उक्तस्तन्निरस्यति * न चेति * एकार्थशब्दस्य सकृदुच्चरितस्यानेकार्थत्वायोगादनेकार्थतायामुच्चारणावृत्तिः स्यात् माहेन्द्रपदेन त्वेकेनैवोपात्तानामनेकेषामर्थानामसकृदुच्चरितैः लौकिकैः शब्दैः कथने ऽपि न वैदिकशब्दावृत्त्यापत्तिरित्यर्थः। कथं माहेन्द्रपदेनानेकार्थोपादानमित्याशङ्क्याह * वृत्तीति * नन्वेवमपि पदस्य पदार्थमात्रवाचित्वात् महत्त्वेन्द्रविशेषणविशेष्यभावद्रव्यदेवतान्वयरूपानेकवाक्यार्थकथनमुच्चारणावृत्तिं प्रयुञ्जीतेत्याशङ्क्याह * एकैका चेति * एवं च सकृदुच्चरितस्यापि माहेन्द्रशब्दस्य वाक्यद्वयेनार्थकथनं युक्तमित्याह * तत्रेति * न च विवरणवाक्यगतोच्चारणावृत्त्या वेदवाक्यावृत्तिरित्याह * यच्चेति * अत्र हेतुमाह * न हीति * यथास्थितस्यैव वेदस्योच्चारणावृत्तिर्भवति नान्यरूपस्येत्याशयः। ननु समासार्थकथनवेलायां महेन्द्र इत्येतावतः समासप्रातिपदिकस्य तद्धितान्तात् पृथक्करणात्तद्धितार्थकथनवेलायां च पुनस्तद्धितसहितप्रयोगादुच्चारणावृत्तिः प्रसज्येतैवेत्याशङ्क्याह * न चेति * कथं विभागं विनार्थकथनमित्याकाङ्क्षायामाह * किं त्विति * आवृत्तिं विना ऽनेकार्थाभिधानशक्तस्य पदस्याविभक्तस्याप्यनेकार्थकथनं पुंवाक्यैर्युक्तमित्याशयः। ननु विभागाभावे पदसमुदायात्मकवाक्यत्वाभावाद्वाक्यार्थाभिधायित्वं न युज्येतेत्याशङ्क्याह * विचित्रेति * ४०।१।१
पदस्यावाक्यत्वे ऽपि वाक्यार्थाभिधायिता दृष्टत्वादविरुद्धेत्याशयः। एकानेकार्थप्रतीतिवैचित्र्यमर्थकथनवैचित्र्येणोपपादयति * तथेति* तत्रोदाहरणान्याह * तद्यथेति * बहुतरपदेन वाक्येन पदार्थकथनोदाहरणार्थं परगामिफलं पाकं निर्वर्त्तयत्येकः पाकं निर्वर्त्तयतीति पूर्वावयवीभूतं पाकं निर्वर्त्तयति वर्त्तमानकाले पाकं निर्वर्त्तयतीत्यनेकेन वाक्येन पदार्थकथनोदाहरणार्थम् * वा तथेत्युक्तम् * न चानेकेन वाक्येन कथ्यमानार्थस्य पचत्यादिपदस्य वाक्यभेदो शाब्दत्वं वा तदर्थस्य लोके प्रसिद्धमित्याह * न चेति * लौकिकवा-

कथन्यायं प्रकृते ऽतिदिशति * एवमेवेति * पौरुषेयत्वशब्देनाशब्दार्थतोक्ता । नन्वेवं सति यौगपद्यमेव कस्मान्नेष्टमित्याशङ्क्याह * अवश्यञ्चेति * क्रमवृत्तित्वाद्वाचो युगपदेनेकार्थकथनस्याशक्यत्वादवश्यं भावी क्रम इत्यर्थः । एवमपि समासपूर्वत्वे को हेतुरित्याशङ्क्याह * सो ऽपि चेति * समासवृत्तेः प्रकृत्यर्थत्वात्तद्धितवृत्तेश्च प्रत्ययार्थत्वात्समासपूर्वतैवोचितेत्याशयः । सापेक्षत्वपरिहारायापि समासपूर्वतैवोचितेत्याह * न चेति * ननु महत्वविशिष्टस्येन्द्रस्य तद्धितान्वयात्तद्धितवृत्त्याविन्द्रस्य महत्वानपेक्षत्वे ऽपि समासवृत्तौ तद्धितापेक्षत्वात्समासो न युज्येतेत्याशङ्क्याह * अथ वेति * एवं च सति यौगपद्ये तद्धितापेक्षत्वेनेन्द्रशब्दस्य महच्छब्दसमासानुपपत्तिर्योक्ता साप्ययुक्तेत्याह * अतश्चेति * नन्वेवं सति क्रमवृत्तित्वाद्वाचो युगपद्वृत्तिद्वयार्थकथनाशक्तावपि क्रियापदस्येवानेकैः कारकपदैर्वस्तुतो युगपत्तद्धितमहच्छब्दाभ्यामिन्द्रशब्दान्वयोपपत्तेर्वृत्तिद्वययौगपद्यं कस्मान्नेष्टमित्याशङ्क्याह * तथापीति * क्रमविशेषे ऽप्ययमेव हेतुरित्याह * यौगपद्ये च गुणस्य देवतात्वान्तर्गतिर्न स्यादित्याह * यदीति * ननु तद्धितार्थप्राधान्यात्तद्वशीकृतयोरिन्द्रमहत्वयोरन्योन्यनियमाद् गुणस्य देवतान्तर्गतिर्भविष्यतीत्याशङ्क्याह * न चेति * क्रियाया युगपदनेककारकसाध्यत्वानियमवत्त्वं युक्तं तद्धितार्थस्य तु देवतात्वस्यैकेन नैराकाङ्क्ष्यान्नोभयनियामकत्वे हेतुरित्याशयः । युगपदुपनिपाते च सतीन्द्रवन्महत्वस्यापि साक्षाद्देवतात्वोपप-

४०२।२ त्तेरग्नीषोमादिवत् द्वन्द्वस्य देवतात्वं स्यादित्याह * सत्यपि चेति * यौगपद्ये च समासस्याकृतावस्थत्वेन समासनिमित्तप्रातिपदिकैक्याभावात् ङ्याप्प्रातिपदिकादिति चोपादेयत्वेनास्य विवक्षितैकसंख्यत्वात्तद्धितान्वयो न स्यादित्याह * अकृतेति * सुबन्तत्वे च महदिन्द्रशब्दयोरप्रत्यय इतिपर्युदासेनाप्रातिपदिकतया तद्धितान्वयायोगादसुबन्तत्वे च समासायोगाद्युगपच्च सुबन्तत्वासुबन्तत्वविरोधात् वृत्तिद्वययौगपद्यं न युक्तमित्याह * किं चेति * क्रमपक्षे समासकाले च सुबन्तत्वं तद्धितकाले चासुबन्ततेत्यविरोधसूचनार्थं ते यौगपद्यवादिनः पक्षइत्युक्तम्। यौगपद्यनिरासमुपसंहरति * तस्मादिति * समासपूर्वत्वोपपादनस्य प्रकृतोपयोगमाह * इतीति * अतो नैवं व्याख्यायमाने पूर्वपक्षनिरासः सिध्यतीत्याह * अतश्चेति * स्वमतेन पूर्वपक्षनिरासे सूत्रं योजयति * तदिति * विधिगतशब्दाभिप्रायः श्रुतिशब्द इति भावः । श्लोकं व्याचष्टे * यदपीति * ऐक्ये ऽपीन्द्रमहेन्द्रयोर्विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन

चोदनेति दशमाधिकरणन्यायेनावाहनादिविषये निगमे मन्त्रकार्ये विधिगतस्यैवशब्दस्योच्चारणावधारणात् महेन्द्रशब्दोक्तस्यैवार्थस्य देवतात्वप्रतीतेरैन्द्रमन्त्रोत्कर्षो ऽपरिहार्य इत्यर्थः। ननु दशमाधिकरणे पर्यायभूतशब्दान्तरनिषेधे ऽपीन्द्रशब्दस्य महेन्द्रशब्दावयवत्वान्नोत्कर्षापत्तिरित्याशङ्क्याह * तत्रेति * तेन चोदनेति दाशमिकसूत्रावयवव्याख्यायै तदुपपादयति * तथा हीति * देवतायाः प्रतिग्रहीतृत्वाभावेन रूपासमवायादुद्देश्यत्वमात्रेणोपकारित्वादुद्देशस्य च शब्दाधीनत्वात्केन शब्देनोद्देष्टव्या देवतेत्यपेक्षायां श्रुतशब्दत्यागेनाश्रुतशब्दकल्पनायोगाद्विधिगतेनैवशब्देन देवतात्वचोदनावगतेर्न शब्दान्तरवत् न्यूनशब्दोच्चारणे ऽपि देवतात्वप्रसिद्धिरित्यर्थः। यत्तु शब्दमात्रस्य देवतात्वाभावादर्थस्य गुणावुक्तावपि तत्त्वानपायात् न्यूनशब्दोच्चारणे ऽपि देवतात्वाविघात इत्युक्तं तन्निरासाय * अर्थो ऽपीत्युक्तम् * महत्त्वविशिष्टस्येन्द्रस्येह देवतात्वविधानान्न शुद्धस्य देवतात्वमस्तीत्यर्थः। श्लोकं व्याचष्टे * देवतात्वस्येति * देवतात्वस्य प्रमाणान्तराविषयत्वमविहितदेवताकल्पनाशङ्कानिरासार्थेन नासति विधाने देवताभावात् सम्बन्धिशब्दो ऽयं देवतेत्यादिना पौर्णमास्यधिकरणभाष्येणोपपादयति * यथेति * श्लोकार्थमुपसंहरति * तेनेति * नन्वग्निपुरोडाशयोरिन्द्रसोमाभ्यामत्यन्तभेदाद्विहितार्थासम्पादकत्वे ऽपि निर्गुणस्य सगुणादत्यन्तभेदाभावाद्विहितार्थसम्पादकत्वं भविष्यतीत्याशङ्क्याभिषुतस्येत्युक्तम् ननु द्रव्यत्वेन विहितस्य रसस्य लतावस्थायामभावाल्लत्ताया विहितार्थासम्पादकत्वे ऽपि इन्द्रस्य शुद्धोक्तावपि वस्तुतो गुणवत्त्वसद्भावाद्विहितार्थसम्पत्तिर्भविष्यतीत्याशङ्क्य *शुद्धे चेत्युक्तम् * वस्तुवृत्तिविवक्षायामैन्द्रदध्यमावास्यायामिति शुद्धेन्द्रविधावपि वस्तुतो गुणवत्त्वसद्भावात् सगुणस्य देवतात्वप्रसक्तेः शब्दाभिधानेन देवतात्वं वाच्यम्। न च शुद्धाभिधानेन गुणवत्त्वोक्तिर्भविष्यतीत्याशयः। ननु गुणस्य गुण्युपलक्षणमात्रार्थत्वेन देवतात्वान्तर्गत्यभावात्कथं गुणवद्विधौ निर्गुणस्य देवतात्वाभाव इत्याशङ्कां प्रश्नपूर्वं निरस्यति *कुत इति * श्लोकं व्याचष्टे * यदि हीति * ननु गुणस्य देवतात्वान्तर्गतौ स्वरूपेणापि देवताया यागसमवाये निर्गुणाभिधानोत्कर्षसिद्धे व्यर्थं श्रुतिसमवायाभिधानमित्याशङ्क्याह * तदिहेति * अतिशयार्थं श्रुतिसमवायाभिधानमित्याशयः। नन्वेवं सति महत्त्वेन्द्ररूपानेकार्थविधानाद्वाक्यभेदः स्यादित्याशङ्क्याह * समासेनेति *विशिष्टरूपैकार्थविधानान्न वाक्यभेद इत्याशयः। शुद्धदेवतात्व-

(right margin, beside line "हरति * तेनेति *…"): ४०३।१

निरासस्य प्रकृतेन्द्रप्रगाथोत्कर्षोपयोगमाह * तत्रेति * शुद्धेन्द्रदे-
वतात्वनिरासे ऽपि विधिश्रुत्या सम्यगवापो ऽवगमो यस्य देवतात्व-
स्य तच्छ्रुतिसमवायि तस्य भावः श्रुतिसमवायित्वमित्येवं सूत्रं
योजयति * अतश्चेति * ननु देवतात्वस्य विधिश्रुत्यधीनज्ञानत्वे त-
द्धितसंयोगेन विज्ञायेतेति भाष्यमयुक्तं स्यादित्याशङ्क्याह * तच्चे-
ति * उपधानार्थस्य चरोर्बार्हस्पत्यो भवतीति तद्धितसंयोगे ऽप्य-
विधानेन देवतात्वानभ्युपगमाद्विध्यधीनमेव देवतात्वं विधेयसम-
र्पकत्वेन तु तद्धितो भाष्यकृतोक्त इत्याशयः । अतो ऽधिष्ठानाभेदे
ऽपि देवतारूपं भिन्नमित्युपसंहरति * तस्मादिति * अस्मिन्नेवा-
र्थे प्रश्नपूर्वं भाष्यं गमयितुमुपक्रमते *कथं त्विति* तत्रेन्द्रो ऽस्येति
भाष्यं शुद्धेन्द्रदेवतानिरासार्थत्वेन व्याख्यास्यन् पूर्वपक्षिणापि शु-
द्धस्य देवतात्वानभ्युपगमादयुक्तमाशङ्क्यापाद्योक्तित्वेन व्याचष्टे
* पूर्वपक्षेति * ननु वशादृष्टान्तात् सगुणो चोदित इति भाष्याच्च
सगुणदेवतात्वस्यापूर्वपक्ष्यभिमतत्वप्रतीतेः। कथं शुद्धेन्द्रदेवतात्वस्य
४०४।७ पूर्वपक्ष्यभिमतत्वापादनमित्याशङ्क्याह * सिद्धवच्चेति * यद्यप्ये-
षो ऽर्थो वस्तुतः पूर्वपक्षिणो ऽनभिमतस्तथाप्यन्यथानुत्कर्षासिद्धेर-
नुपपत्तिकमपि सिद्धवदभिप्रेतं मन्वानः सिद्धान्ती इन्द्रो ऽस्य ग्रहस्य
देवतेति ब्रवीतीत्युक्ते तु सिद्धान्ते ऽपीन्द्रस्यैव महत्वविशिष्टस्य देव-
तात्वादिन्द्रस्य देवतात्वनिरासो न युक्त इत्याशङ्क्य *निष्कृष्येत्युक्त-
म् * महत्वान्निष्कृष्य शुद्धस्येन्द्रस्य देवतात्वमापाद्य निरस्यतीत्य-
र्थः। यत्रेति वार्थवत्वादित्यत्रोत्कर्षस्य पूर्वपक्षिणाभ्युपेष्यमाणत्वात्पू-
र्वपक्ष्येकदेशी पूर्वपक्षिवादिशब्देनोक्तः (स्वयं वानुत्कर्षे ऽप्यर्थवत्त्वा-
दिशब्देनोक्तः[2]) स्वयं वानुत्कर्षे ऽप्यर्थवत्वाभिधानार्थतया तस्य सूत्रस्य
व्याख्यास्यमानत्वात्पूर्वपक्षिणो ऽनुत्कर्षो ऽभिमतः । न चास्येति
भाष्यमपि शुद्धपदाध्याहारेण व्याचष्टे * न चेति * वृत्तिद्वययौग-
पद्यनिरासार्थत्वप्रदर्शनाय * अकृतइत्युक्तम् * प्रधानस्य सापेक्षत्वे
ऽपि समासतद्धितसंयोगोपपत्तेरुपसर्जनीभूतस्येत्युक्तं तद्धितेति भाष्यं
प्रधानसापेक्षत्वे समासाविघातादयुक्तमाशङ्क्यासुबन्तत्वानिमित्तस-
मासासम्भवाभिप्रायेण व्याचष्टे * तद्धितेति * कस्तर्हि प्रधानसा-
पेक्षसमासान्वाख्यानस्य विषय इत्याशङ्क्याह * तेनेति * नन्वसुब-
न्तत्वात् समासायोगे ऽप्यसमस्तयोरेव महदिन्द्रशब्दयोस्तद्धितान्व-
यो भविष्यतीत्याशङ्क्याह * अकृते चेति * यदि त्वेतद्दोषपरिहारा-

---

१ तुशब्दस्थाने नन्विति प० ।

२ अयं पा० २ पु० ना० ।

येन्द्रप्रातिपदिकमात्रस्य तद्धितान्वयो ऽभ्युपगम्यते ततो गुणस्य देवतात्वानन्तर्गतेर्महच्छब्दानर्थक्यं तद्धितप्रकृतौ च प्रातिपदिके महच्छब्दस्य विशेषणस्यानन्तर्गतेः पूर्वपदवृत्तिर्न स्यादित्याह * शुद्धस्य चेति * न चेति भाष्यं यौगपद्ये दोषान्तराणां वक्ष्यमाणत्वान्मध्ये क्रमानिरासानौचित्येनायुक्तमाशङ्क्य परानभिप्रेतत्वाभिधानार्थत्वेन व्याचष्टे * क्रमेति * क्रमवृत्तौ महत्वविशिष्टस्येन्द्रस्य देवतात्वापत्तेरित्याशयः । ननु तद्धितपूर्वत्वे विशिष्टस्य देवतात्वानापत्तेः किमित्यनभिप्रेतत्वमित्याशङ्क्याह * पूर्वमिति * समासपूर्वत्वस्य स्वाभिमतत्वान्निरासो न युक्त इत्याशङ्क्य ननु समासपूर्वत्वे ऽपि प्राधान्येनेन्द्रस्य शुद्धस्यैव तद्धितान्वयाद्देवतात्वं भविष्यतीत्याशङ्कोत्तरत्वेन शुद्धपदाध्याहारेण व्याचष्टे * न चेति * समासान्तर्गतस्येन्द्रस्य पृथक् प्रातिपदिकत्वाभावात्तद्धितान्वयो न युक्त इत्याशयः । एतस्मिन्नेवेति यौगपद्याशङ्काभाष्यं प्रागेव यौगपद्यनिरासादयुक्तमाशङ्क्य क्रमवृत्तौ निरस्तायां पारिशेष्यान्निरस्तमपि यौगपद्यमेव क्रमविशेषानवधारणेनौचित्यादापाद्यतइत्येवमर्थत्वेन व्याचष्टे * तेनेति * न चेति वैरूप्याभिधानार्थं भाष्यं व्याचष्टे * ततश्चेति * विस्पष्टश्चेत्यनेकार्थविधिदोषाभिधानार्थं भाष्यं समासार्थस्यैकस्य देवतात्वविधावनेकार्थविध्यनापत्तेरयुक्तमाशङ्क्याकृतसमासावस्थाविषयत्वेन व्याचष्टे * विस्पष्टश्चेति प्राक्समासाद्वाक्यभेदमाहेत्यन्वयः । तस्मादित्युपसंहारभाष्यं स्वाभिप्रेतार्थानुगुणत्वायाकारप्रश्लेषेणाध्याहृतशुद्ध कथं तर्हि शब्दकभिन्नवाक्यत्वेन वा द्वेधा व्याचष्टे * तस्मादिति * महेन्द्रेति भाष्यं विशिष्टदेवतात्वोपपादनार्थत्वेन व्याचष्टे*समासेति* न तु केवलादिन्द्रशब्दादित्येवं भाष्यगत- ४०५।८
स्तुशब्दो व्याख्येयः । ननु सकलान्महेन्द्रशब्दात्तद्धितोत्पत्तिर्न त्विन्द्रशब्दमात्रादिति कथमवगम्यते इत्याशङ्क्य यस्मात्सकलान्महेन्द्रशब्दात्तद्धितोत्पत्तिस्तस्मात्सकलं प्रतिपादिकमर्थवन्न त्ववयवस्येन्द्रशब्दमात्रस्य तद्धितसम्बन्धेन सकलं प्रातिपदिकमर्थवन्महच्छब्दानर्थक्यापत्तेर्निष्कर्षाशक्तेश्चावयवस्य तद्धितसम्बन्धायोगादित्यभिधानार्थं तस्मादिति भाष्यं परोक्तावयवव्युत्पत्तिनिराकरणार्थनिरासपूर्वकं व्याचष्टे * न त्विति * शुद्धेन्द्रदेवतात्वनिरासप्रयोजनाभिधानार्थं तस्मादितिभाष्यम् इन्द्रस्यैव महत्ववैशिष्ट्येन महेन्द्रदेववतात्वादयुक्तमाशङ्क्य व्याचष्टे * तस्मादिति * अधिष्ठानैक्ये ऽपि व्यपदेशभेदसम्भवे वृद्धोक्तं दृष्टान्तमुदाहरत्याह * चेति * आचार्यशब्दार्थस्य शिष्यमेव प्रतिसम्बन्धावेन शिष्यापेक्षत्वादपेक्षणीयाभावे

बा ऽपेक्षानुपपत्तेरपेक्षणीयः शिष्यः प्रतिसम्बन्ध्याचार्यस्य शिष्यापेक्षायां हेतुः मातुलस्य च भागिनेयापेक्षायां भागिनेयो हेतुः तद्भेदेन द्रव्यैक्ये ऽपि पृथक्त्वेन व्यवहारो दृश्यतइति वृद्धश्लोकार्थः । यदपीति शङ्काभाष्यं पूर्वपक्षिणः कदा चिदपि महत्वस्य देवतात्वान्तर्गतेन्द्रनिष्ठत्वेन वृत्रवधोत्तरकालत्वाभिधानानर्थक्यादयुक्तमाशङ्कानन्तर्गत्यभिधानार्थत्वेन व्याचष्टे * यदपीति * तथेत्युत्तरभाष्यं प्रागेव व्याख्यातमित्याह * अस्य त्विति * ननु महत्वस्य देवतात्वान्तर्गतौ शुद्धेन्द्रदेवत्यप्रगाथस्य तत्प्रकाशनासामर्थ्येन देवतैक्ये ऽप्युत्कर्षसिद्धेर्भेदाभिधाने व्यर्थमित्याशङ्क्य भेदाभावे छागमन्त्रस्येव वशाजाद्द्रव्यकादिन्द्रमन्त्रस्य महेन्द्रदेवताकात्कर्मणः कथं चित्प्रकाशकत्वसम्भवेनोत्कर्षासिद्धेस्तात्सिद्ध्यर्थं प्रयत्नेन देवताभेदाभिधानमिति सूचयितुं देवताभेदेन कथं चिदनुत्कर्षः सिद्ध्यतीति वक्तुमाह * स्थिते चेति * अनुत्कर्षवादिना हि शुद्धस्येन्द्रस्य यत्प्रकाशनं तद्देवताया एव प्रकाशनं शुद्धस्यैव देवतात्वाद्विशिष्टस्यापि देवतात्वे शुद्धेनेन्द्रशब्देन छागशब्देनेव वशात्वविशिष्टस्य द्रव्यस्य विशेषणाप्रकाशने ऽपि स्वरूपेण प्रकाशनं विशिष्टस्यापि वा तद्धितान्वयश्रवणे विशेषणस्यानन्वयाच्छुद्धस्यैव देवतात्वं शुद्धेन्द्रशब्दोच्चारणे ऽपि वा प्रगाथगतेन मनोतागतेनैवाग्निशब्देनाग्नीषोमयोर्लक्षणया विशिष्टप्रकाशनम् आदिशब्दात्परमैश्वर्यवाचिनेन्दतिधातुना महत्वविशिष्टप्रकाशनमिति वाच्यम् । न चैषां प्रकाराणां मध्ये कश्चित्प्रकारः सम्भवतीत्युत्कर्षो दुष्परिहर इत्यर्थः । ननु देवताभेदे सतीन्द्रशब्देन महेन्द्रप्रकाशनाशक्तेः सिद्धान्ते ऽप्युत्कर्षः स्यादित्याशङ्क्याह * अस्मत्पक्षइति * यागानङ्गस्येन्द्रादेस्त्यज्यमानद्रव्योद्देश्यत्वलक्षणहविर्भाक्त्वाख्यदेवतात्वाभावे ऽपि यमर्थं प्राधान्येन मन्त्रो ऽभिधत्ते सा देवतेत्येवं लक्षणस्तुतिभाक्त्वाख्यदेवतात्वसद्भावाद्देवतामित्युक्तम् । प्रकरणान्माहेन्द्रयागाङ्गत्वे ऽप्यैन्द्रप्रगाथसाध्यायाः पृष्ठाख्यायाः स्तुतेः सन्निपत्योपकारित्वे पशुपुरोडाशान्तिमप्रयाजादिवद्देवतासंस्कारद्वारा यागाङ्गत्वशङ्कानिरासार्थो मात्रशब्दः । व्यपदेशाच्चेति सूत्रं व्यपदेशभेदाच्च भेद इत्यादिना प्रागेव व्याख्यातत्वान्न व्याख्यातम् ।

## गुणश्चानर्थकः स्यात् ॥ १८ ॥

यदेत्यादिभाष्येण शुद्धस्येन्द्रस्य देवतात्वे महत्वगुणकीर्त्तनानर्थक्यापत्तिरित्येवं सूत्रं व्याख्यातं तत्प्रमादपाठस्य तुल्यसांप्रदायिकत्वेन निरस्तस्य आशङ्कितुमशक्यत्वेन गुणस्य देवतात्वानन्तर्गतिवा-

दिना स्तुत्यर्थकीर्त्तनस्यावश्यवाच्यत्वादानर्थक्यपरिहारोपपत्तेरयुक्तमाशङ्क्य प्रकृतग्रहसम्बन्धनिरपेक्षस्येन्द्रस्वरूपस्य वा स्तुतिः प्रकृतग्रहसम्बन्धिनो वेति विकल्प्याद्यकल्पे विधिशेषत्वाभावेनानर्थक्यमुपपादयितुमाह * यदि चेति * स्तुतेर्विध्यङ्गत्वं विनानर्थक्यापत्तेर्देवतात्वान्तर्गत्यभावे गुणाभिधानानर्थक्यस्यापरिहार्यत्वम् * सर्वो हीत्यनेनोक्तम् * अथोच्येतेति भाष्येण द्वितीयं कल्पमाशङ्क्य नैवमित्यनेनेन्द्रस्य प्रकृतग्रहसम्बन्धाप्रतीतेर्न स्तुत्येन्द्रविशेषणत्वं प्रकृतग्रहसम्बन्धस्य सम्भवतीत्युक्तम्। नन्वेवं तर्हि को ऽसाविन्द्र इत्यपेक्षायां यो महानिति विधेयेन्द्रोपलक्षणार्थं गुणाभिधानं भविष्यतीत्याशङ्कानिरासार्थं गुणसम्बन्धस्य चेत्युक्तम्। तदुभयं व्याचष्टे *किं चेति* इन्द्रस्य ग्रहसम्बन्धप्राप्तेः पश्चादभिहितः सन् विधेयदे- ४०६।२
वतोपलक्षणत्वेन वोक्तः सन् गुणो देवतात्वे ऽनन्तर्गतो भवेन्न चैतत्पश्चादभिधानं देवतोपलक्षणत्वेन वा वचनमस्ति सम्भवतीन्द्रस्य ग्रहमहत्वसम्बन्धयोरन्यतो ऽप्राप्तत्वादित्युक्तम्। नन्वन्यतो प्राप्तावपि माहेन्द्रपदादेव प्राप्तिर्भविष्यतीत्याशङ्क्य त्वत्पक्षे ऽस्य पदस्य स्तुत्यर्थत्वेन लक्षणार्थत्वेन वा विध्यर्थत्वायोगादेकस्मिंश्च पदे निष्कर्षासम्भवेनांशेन विध्यनुवादायोगान्नास्मादेव प्राप्तिः सम्भवतीति तेशब्देनोक्तम् श्लोकं व्याचष्टे * न हीति * तस्मादपीत्युपसंहारभाष्यं व्याचष्टे * तस्मादिति *

## तथा याज्यापुरोरुचोः ॥ १९ ॥

पुरोरुक्शब्दस्य शस्त्रगतमन्त्रविशेषवाचित्वे ऽपि याज्यासाहचर्येणेहानुवाक्यावाचित्वं वक्तुं भाष्यकृता पुरो ऽनुवाक्याशब्दः प्रयुक्तः। तथा शब्दो बहुदुग्धिमन्त्रयोर्भेदव्यपदेशादिन्द्रमहेन्द्रयोर्भेदस्तथैन्द्रसानसिं रयिं प्रससाहिषे पुरुहूत शत्रूनिति याज्यानुवाक्याद्वयमैन्द्रं महां इन्द्रो य ओजसा भुवस्त्वमिन्द्र ब्रह्मणा महानिति माहेन्द्रमिति व्यपदेशभेदादिन्द्रमहेन्द्रयोर्भेद इत्येवं व्याख्यातः। तत्र कथं व्यपदेशस्य देवताभेदहेतुतेत्यपेक्षायां बहुदुग्धिमन्त्रोक्तां देवतैक्ये विकल्पापत्तिमतिदेष्टुमाह * पूर्ववदिति * व्यवहितातिदेशपरिहार्थं माहेन्द्रं दध्यमावास्यायां माहेन्द्रं पयो ऽमावास्यायामित्यत्रापि महत्वस्य देवतात्वानन्तर्गतौ गुणानर्थक्यं तथाशब्देनातिदेष्टव्यम्।

## वशायामर्थसमवायात् ॥ २० ॥

ननु वशादृष्टान्तेन विशिष्टविधावपि शुद्धप्रकाशनोपपत्तेर-

नाशङ्कितगुणानन्तर्गत्यापादनेन दूषणाभिधानमयुक्तमित्याशङ्कानिरासार्थैतत्सूत्रं वशायामर्थरूपेण कर्मसमवायिनो हृदयाद्यवयवान्वयं प्रत्यक्षेणावगच्छाम इति भाष्येण वशायामर्थसमवायाद् गुणार्थस्याप्यभिधानस्यानुत्कर्षो युक्त इत्येवं व्याख्यातं तदुपपादयति * वशादीति *

## यत्तेति वार्थवत्वात् स्यात् ॥ २१ ॥

संस्कारकर्मत्वे ऽप्यनुत्कर्षवादिनि पूर्वपक्ष्येकदेशिनि न श्रुतिसमवायित्वादितिसूत्रपञ्चकेन निरस्ते परमपूर्वपक्षी लिङ्गेन क्रमसंन्निधी बाधित्वा न्याय्य एवोत्कर्ष इत्यनेन सूत्रेण प्रतिपादयतीति यथाभाष्यं तावद् व्याचष्टे * बलवदिति * अनेन चेतिकरणेन संस्कार्यसद्भावं परामृश्य यत्र संस्कार्यसद्भावस्तत्र प्रगाथः स्यादित्येवं सूत्रं व्याख्यातम्। प्रागाथमेव वेतिकरणेन परामृश्य यत्र प्रगाथः पठ्यते तत्रैव स्यादिन्द्राभिधानद्वारेण लक्षणया महत्त्वविशिष्टेन्द्रप्रकाशनेनार्थवत्त्वादित्युत्कर्षापत्तिपरिहारार्थत्वेनैवैतत् पूर्वपक्षसूत्रं व्याख्येयमित्याह * अथ वेति * यथा मनोताख्यसूक्तस्थो ऽग्निशब्दः करणेनाग्नीषोमसमासस्याग्निप्रकाशकतयावगम्यमानः सहचरितसोमलक्षकत्वात् समाप्तचर्थस्य समुदायस्य प्रकाशनं करोति तथायमिन्द्रशब्दो महेन्द्रसमासार्थैकदेशतया प्रत्यभिज्ञायमानत्वात् समासार्थविशिष्टस्य प्रकाशनं करोतीत्यर्थः । श्लोकं व्याचष्टे * न्वार्थेति * ननु त्वं ह्यग्ने प्रथमो मनोतेति सूक्तमन्वाहेति श्रुत्या मनोतासूक्तविधानाल्लैङ्गिकोत्कर्षानुपपत्तेर्लाक्षणिकार्थत्वं युक्तं प्रगाथस्य तु श्रौतविधानाभावाल्लिङ्गेनोत्कर्षोपपत्तेर्न लाक्षणिकार्थत्वं युक्तम् अनुत्कर्षाभिधानार्थत्वे चास्य सूत्रस्योत्तरसूत्रमुत्कर्षे सति केषुचिन्मन्त्रेष्वानर्थक्यापत्तेर्नोत्कर्षपक्षो युक्त इत्यभिधानार्थं न सङ्ग-
४०७। च्छेतेत्याशङ्क्याह * अतश्चेति * अनुत्कर्षे ऽप्यर्थवत्त्वोपपत्तेर्न संस्कारकर्मत्वे सत्यसमवेताभिधानलक्षणदोषापत्तिरिति प्रौढिप्रदर्शनार्थेयं व्याख्या उत्तरसूत्रं तु याम्यादीनामेकदेशतयापि समासार्थलक्षणकत्वायोगादुत्कर्षापत्तेरपरिहार्यमानर्थक्यमित्यभिधानार्थेत्याशयः ।

## न त्वाम्नातेषु ॥ २२ ॥

ऐन्द्रप्रगाथादिषूत्कृष्यमाणेष्वर्थवत्त्वसम्भवे ऽपि सर्वेषु प्रकरणाम्नातेष्वप्युत्कृष्टे ऽर्थवत्त्वं नास्तीत्युत्कर्षापादकसंस्कारकर्मत्वप-

क्षो न युक्त इति परमपूर्वपक्षदूषणाशङ्कार्थत्वेन सूत्रव्याख्यानार्थमपरेषामिति भाष्यं व्याचष्टे * आम्नातेष्वपीति * अर्थदर्शनमित्यनेन पूर्वपक्षसूत्रस्थस्यार्थवत्त्वशब्दस्य प्रथमान्तत्वेन विपरिणतस्यानुषङ्गो दर्शितः। उत्कृष्टशब्देनाग्निमारुते विहितानां याम्यादीनामुत्कृष्टानामन्यत्राप्यर्थवत्ता नास्तीति भाष्यार्थः सूचितः। एतदेवोपपादयति * न हीति * विधिशब्देनाम्नातशब्दो विहितार्थतया व्याख्यातो भवति। ननु यमादेर्ग्रहान्तरे ऽपि देवतात्वाभावाद्याम्यादेरानर्थक्ये ऽप्यैन्द्रप्रगाथादेरैन्द्रादिग्रहयागेष्वर्थवत्त्वोपपत्तेः संस्कारकर्मत्वं भविष्यतीत्याशङ्क्याह * ततश्चेति *

## दृश्यते ॥ २३ ॥

तदुच्यतइत्यादिभाष्येण सर्वेष्वर्थवत्त्वं दृश्यतइत्येवमानर्थक्यापत्तिलक्षणदूषणशङ्कानिरासार्थत्वेनैतत्सूत्रं व्याख्यातं तत्र याम्यादीनां ग्रहयागसान्निध्याम्नातेन तद्देवतास्मारकत्वावगतेर्यमादीनां च क्व चित् ग्रहदेवतात्वाभावाद् दूषणपरिहारासम्भवमाशङ्क्याह * यमादय इति * ग्रहदेवतात्वाभावे ऽपि कर्मान्तरदेवतात्वेन प्रकारान्तरेण वा यथासम्भवमुपयोगात्प्रकाश्यत्वं भविष्यतीत्यर्थः। मण्डूकसूक्तस्याग्नावर्थवत्त्वं भाष्योक्तमुपपादयति * मण्डूकेति * राजसूये ऽक्षसूक्तस्योपपादयति * अक्षेति * मूषिकासूक्तस्येति भाष्यमेकादशिन्यामथाखुविनियोगाभावादयुक्तमाशङ्क्योपपादयति * मूषिकेति * आखोरविनियोगे ऽप्युपशयो यूपो भवतीत्युपशयस्यैकादशिन्यां विनियोगात्तस्य च सर्वे वान्ये यूपाः पशुमन्तो ऽथो ऽपशव एवापशुरित्युपक्रम्यासौ ते पशुरिति निर्दिशेत् यं द्विष्यादित्युक्त्वा यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयादिति मन्त्रविधानादाखुसम्बन्धकीर्त्तनाखुस्तुतिद्वारेणोपशयस्तुतित्वान्मूषिकासूक्तस्यैकादशिन्यां प्रयोग इत्यर्थः। सर्वेषामिति कुसुम्भकसूक्तादिविषयत्वेन व्याचष्टे * कुसुम्भकेति * सर्वा इति श्रुत्युपन्यासस्य हेतुत्वेनोपयोगमाह * वाचस्तोम इति * यस्येति श्रुत्यन्तरोपन्यासस्यार्थवत्त्वाभिधानार्थत्वमाह * तथेति * सहस्रमृचामोदेतोः शंसेदित्याश्विनाख्ये शस्त्रे सूर्योदयावध्यृक्सहस्रं समाप्योदिते सूर्ये सौर्यस्य सूक्तम् शंसनं विधाय समाप्ते ऽप्यृक्सहस्रे सूर्यानुदये सत्यृक्सहस्रसमाप्तेः सूर्योदयावधित्वासम्भवाच्छस्त्रविच्छेदपरिहारार्थं सूर्योदयावधि यासां कासां चिदुपदेशात् सर्वासामर्थवत्तेत्यर्थः।मण्डलाख्यदशावयवत्वेन ऋग्वेदसंहिताया दशतयीत्वाद् तद् गता ऋचो

क्षाशतस्य इति व्याख्यातुमृचामित्युक्तम् । ननु वाचस्तोमाश्विनयोर- पि कुसुम्भकसूक्तादेः समवेतार्थत्वाभावाददृष्टार्थत्वाभ्युपगमे चानु- त्कृष्टस्यार्थवत्त्वोपपत्तेरुत्कर्षाभिधानानर्थक्यमित्याशङ्कानिरासार्थं त- स्मादिति भाष्यं व्याचष्टे * तत्र चेति* तत्र वाचस्तोमाश्विनयो- रेव मन्त्रविधानसामर्थ्याददृष्टाश्रयणत्वं युक्तमित्युक्ते । नन्वैन्द्रप्रगाथा- देरपि तर्ह्यनुत्कृष्टस्यैव सन्निधावाम्नानकल्प्यविधिसामर्थ्याददृष्टार्थत्वं भविष्यतीत्याशङ्क्य * वचनेनैवेत्युक्तम् * श्रुतिविहितस्यैव लिङ्ग- बाधेनादृष्टार्थतोचिता न दुर्बलसांनिध्यादिप्रमाणकस्येत्याशयः । न- न्वेवं सति श्रुतिबलादैन्द्रीवद् गौणलाक्षणिकवृत्त्यन्तराश्रयणेन स- मवेतार्थाभिधायित्वं सूक्तवाकवद्वा मन्त्राभिधेयस्य कर्मसमवायः कस्मान्न भवतीत्याशङ्क्य *असमवेतार्थेत्युक्तम् * करणत्वेन विनि- युक्तस्य मन्त्रस्य क्रियां तत्साधनं वा ऽनभिदधतः करणत्वायोगा- त्तत्सिद्ध्यर्थं गौणत्वादिकल्पना मन्त्रार्थस्य कर्मसमवायकल्पना वोचिता न चैषां करणत्वेन विनियोगो ऽस्तीत्याशयः । अनेन चो- त्कृष्टानां प्रकृतावप्रयोज्यानामपि कुसुम्भकसूक्तादीनां तस्माद्वाच- स्तोमादौ विधानात् समवेतार्थत्वाभावे ऽप्यदृष्टार्थत्वेनार्थवत्तास्ती- ति भाष्यं व्याख्यातम् । नन्वेवं सति मण्डूकसूक्तादेरपि वाचस्तोमा- श्विनयोरेव विधिसामर्थ्येनादृष्टार्थतया निवेशोपपत्तेर्नाग्न्यादौ वि- नियोगकल्पनेत्याशङ्क्याह * न चेति * दृष्टार्थसम्भवे तत्त्यागो न युक्त इत्याशयः । एतदेव दृष्टान्तेनोपपादयति * तथा हीति * अ- न्यत् यज्ञस्य साधनादावपघातो देवा अवन्तु न इति जपेदपि वा ऽन्यां वैष्णवीमिति यज्ञाङ्गभ्रेषे तत्समाधानापेक्षायां विधीयमानस्य जपस्य तादर्थ्येनादृष्टार्थतया तत्साधनभूताया वैष्णव्यादेर्ऋचो दृ- ष्टार्थत्वायोगेनादृष्टार्थत्वे ऽपि न तद्दृष्टान्तेन दृष्टार्थयागाङ्गदेवता- स्मृतिसाधनत्वेन सम्भवद्दृष्टार्थत्वस्य याज्यादेरपि दृष्टार्थत्वकल्पनो- चितेत्यर्थः ।

अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती

क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥

पूर्वपक्षानिरासे सिद्धान्ताभिधायित्वे ऽपि पक्षद्वयप्रतिभाना- त्सन्देहापत्तेस्तन्निरासे श्रुतिसंयोगात्प्रकरण इति सूत्रावयवं योज- यन् अथ वार्थैकदेशो ऽयमिति स्वयं व्याख्यातं पूर्वपक्षसूत्रपक्षे ता- 
४०८।६ वदनुभाषणपूर्वकं योजयति * यदुक्तमिति * एतच्छब्देन लक्षणा-

परामर्शः । अनेन च प्रकृतदेवतालक्षणार्थत्वे सत्यश्रुतिसंयोगदोषापत्तेरित्यकारप्रश्लेषेण सूत्रावयवो योजितः । ननु मनोतावल्लक्षणा न दोषायेत्याशङ्क्याह * न हीति * मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति प्रैषसामर्थ्यान्मनोतासूक्तस्य हविर्देवतास्मृत्यर्थत्वावगतेः सोमसहितस्यैव चाग्नेर्हविर्देवतात्वाद्युक्ता लक्षणा ऐन्द्रप्रगाथस्य तु हविर्देवतास्मृत्यर्थत्वे प्रमाणाभावात्स्वरूपमात्रेणेन्द्रस्य स्तुत्यर्थं प्रकाश्यत्वोपपत्तेर्न लक्षणा युक्तेत्याशयः । ननु विरोधाभावे ऽपि दृष्टार्थत्वाय लक्षणाङ्गीकरणं युक्तमित्याशङ्क्याह * सर्वेति * वैष्णव्यादेरपि देवताभूताग्न्यादिलक्षणया दृष्टार्थत्वोपपत्तेरनिष्टापत्तिः स्यादित्यर्थः। भाष्यकृद्व्याख्यातपूर्वपक्षसूत्रपक्षे ऽप्यनुभाषणपूर्वकमकारप्रश्लेषं विना योजयति*यस्त्विति* अनेन च प्रक्रियतइति कर्मव्युत्पन्नं प्रकरणशब्दमङ्गीकृत्य प्रकृते माहेन्द्रयागाङ्गभूते पृष्ठाख्ये स्तोत्रे रथन्तरचोदनोपस्थानात्मकेन सन्निधिना क्लृप्तया श्रुत्यैन्द्रस्य प्रगाथस्याङ्गत्वेन संयोगादिति सूत्रावयवो योजितः । ननु सन्निधेर्लिङ्गेन बाधाच्छ्रुतिकल्पकत्वं न सम्भवतीत्याशङ्क्याह * विनेति* लिङ्गस्येह सन्निधिबाधकत्वायोगे चकारसूचितं तावद्धेतुमाह * यदीति * पूषाद्यनुमन्त्रणमन्त्राणां यागानुमन्त्रणसमाख्यया ।

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वंन संस्मरेत् ।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥

इत्यनुमन्त्रणानां स्मारकत्वलक्षणेन दृष्टार्थत्वावगतेः प्रकृताग्नेयादियागस्मृत्यसामर्थ्याच्च लिङ्गेन प्रकरणकल्प्यश्रुतिप्रतिवन्धो युक्तः । ऐन्द्रप्रगाथादेस्तु दृष्टार्थत्वस्य प्रागनवगतेर्लिङ्गव्यापाराभावान्न क्रमसन्निधिकल्प्यश्रुतिप्रतिबन्धकत्वं सम्भवतीत्याशयः । लिङ्गादेर्बलवद्विरोधे श्रुतिकल्पकत्वाभावात्प्रतिबन्धवाची बाधशब्दः लिङ्गक्रमसमाख्यानादित्यत्र च लिङ्गस्य सामान्यसम्बन्धसापेक्षत्वस्य वक्ष्यमाणत्वादस्य च प्रगाथस्य क्रत्वन्तरेण सामान्यसम्बन्धाभावात् लिङ्गविनियोज्यत्वानुपपत्तेर्न तद्बलेन क्रमसान्निधिकल्प्यश्रुतिप्रतिबन्धो युक्त इति कण्ठोक्तं हेतुं व्याचष्टे * न चेति * कर्मान्वयं विना हविर्भाक्त्वलक्षणदेवतात्वायोगात् स्तुतिभाक्त्वलक्षणदेवतात्वाभिप्रायो देवताशब्दः सामर्थ्येन देवतास्वरूपे कर्मान्वयानपेक्षविनियोगापत्तेरानर्थक्यं स्यादित्यर्थः । न मन्त्रमिति तु पाठे तत्सामर्थ्यमन्त्रं न विनियुञ्जीतेत्युक्ते कस्मादित्यपेक्षायां स्वरूपविनियोगे सत्यानर्थक्यापत्तेः कर्मान्वितरूपे च लिङ्गस्य व्यापाराभावादि-

१ दृष्टार्थो महेन्द्रस्तदुपलक्षणार्थत्वमिन्द्रशब्दस्येत्यर्थः ।

ति विकल्प्य व्याख्येयम्। ननु लिङ्गस्य कर्मान्वितरूपविनियोगे व्यापारभावे कथं पूषाद्यनुमन्त्राणानां पूषादिदेवत्ये कर्मणि लिङ्गेन विनियोगो ऽत आह * तदेतदिति * यागानुमन्त्रणसमाख्यया सामा-
४०९।१ न्यतः क्रतुसम्बन्धावगतेर्लिङ्गेन द्वारविशेषविनियोगो युक्त इत्याशयः । ततश्चानर्थक्यापत्तेरुत्कर्षो न युक्त इत्युपसंहरति * तस्मादिति * स्तुत्यर्थत्वेन मन्त्राणां दृष्टार्थत्वे ऽपि तज्जन्याया स्तुतेरदृष्टार्थतोक्ता एवं पूर्वपक्षनिरासार्थत्वेन स्वयं द्वेधा श्रुतिसंयोगं व्याख्यायाधुना सिद्धान्तोपपादनार्थत्वेन भाष्यकारीयाश्चतस्रो व्याख्याः सङ्गृह्णाति * किं चेति * अभिधानं च कर्मवदिति सूत्रस्य द्वेधा व्याख्यास्यमानत्वात् द्वितीयाभिप्रायत्वे पौनरुक्त्यापत्तेराख्यातश्रुत्यभिप्रायतयापि च श्रुतिसंयोगो भवति प्रउगं शंसतीति भाष्यस्य व्याख्यानादाख्यातमपि द्वितीयाग्रहणेनोपलक्षितं भाष्यक्रमात् सप्तम्यनन्तरं द्वितीयानुक्रमितव्यापिपादभङ्गापत्तेः षष्ठ्यनन्तरमनुक्रान्ता सिद्धान्ते सप्तमीसंयोगसम्भवाभिप्रायार्थं यदीति भाष्यं गुणवत्त्वज्ञापनाख्यायाः स्तुतेः स्तोतृपुरुषाधारत्वेनाक्षरानाधारत्वेनायुक्तमाशङ्क्योपपादयति * गुणेति * अयमाशयः ज्ञानहेतुर्व्यापारो ज्ञापनं स चाक्षराणामविधानाख्यः ·पुरुषस्याप्यभिधायकाक्षरोच्चारणाख्यः । तत्र पुंव्यापारे ऽक्षराणामकर्तृत्वेनाधारत्वायोगे ऽप्यभिधानाख्ये व्यापारे ऽक्षराणां कर्तृत्वात्कर्त्राधारत्वाच्च व्यापारस्याक्षराधारता युक्तेति पूर्वपक्षे सप्तमीसंयोगानुपपत्त्यभिधानार्थं यदि प्रकाशनमिति भाष्यं व्याचष्टे * प्रकाशने त्विति * नन्वभिधानाख्यायां स्तुतावपि तृतीयाप्राप्तिस्तुल्येत्याशङ्कते * नन्विति * शब्दानां करणत्वं वा कर्तृत्वं वा निरूप्यतइत्यभिधानक्रियायां शब्दानां करणत्ववत् कर्तृत्वस्यापि विवक्षाभेदेनोक्तत्वात्कर्त्तुश्च क्रियाधारत्वसद्भावात्सप्तमी युक्तेति परिहरति * नैष दोष इति * प्रकाशनाधारत्वं तु शब्दस्य न कथं चिदस्तीत्याह * प्रकाशनमिति * ननु प्रकाशनशब्देन ज्ञानजन्यातिशयविवक्षायां तस्याक्रियात्वेन कारकान्वयायोगात् कवतीनां न तत्र करणत्वं ज्ञानक्रियाविवक्षायां त्वात्माधारत्वात्तस्या देवताधारत्वाभिधानं न युक्तमित्याशङ्कानिरासार्थम् * परमार्थतस्तावदित्युक्तम् * समवायिकारणस्याधारत्वप्रसिद्धेः परमार्थशब्देनात्मसमवेतता ज्ञानस्योक्ता साक्षाच्छब्दार्थे वा परमार्थशब्दः ज्ञानमात्मसमवेतत्वात्साक्षादात्माधारमित्यर्थः। यत्तु भाष्यकृता देवताधारं प्रकाशनमित्युक्तम् तद्देवताया ज्ञानजन्यातिशयाश्रयत्वलक्षणात् व्याप्यत्वात्फलगतं हेतावुपचरितमित्युक्ते। ननु ज्ञानस्यातीता-

नागतवर्त्तमानविषयत्वादतीतानागतयोश्चाश्रयत्वायोगात् ज्ञानस्य विषयाश्रितातिशयहेतुता न युक्तेत्याशङ्क्य * कर्मत्वेत्युक्तम् * पाकादिक्रियाकर्मणस्तण्डुलादेः क्रियाजन्यातिशयाश्रयत्वदर्शनात्कर्मत्वेन ज्ञानक्रियाकर्मणो ऽपि क्रियाजन्यातिशयाश्रयत्वे ऽनुमिते तद्बलेनातीतानागतयोरपि अतिक्रान्तदिवसादिगतसङ्ख्यादिवदाश्रयत्वोपपत्तिरभ्युपगन्तव्येत्याशयः। नन्वौपचारिकदेवताधारत्वाभिधानस्य किं प्रयोजनमित्याशङ्क्य कवतीनामौपचारिकमपि ज्ञानाधारत्वं नास्तीत्यभिधानप्रयोजनं सूचयितुमाह * तत्रेति * अपि चेति भाष्यं श्लोके द्वितीयाग्रहणेनाख्यातस्याप्युपलक्षितत्वाद् द्वितीयाश्रुतिसंयोगस्य चाभिधानं च कर्मवदिति सूत्रव्याख्यातभाष्यात्प्रउगं निष्कैवल्यमिति द्वितीयया स्तुतेः प्राधान्यावगतिरित्येवमर्थतया ज्ञातुं शक्यत्वात्तदुपलक्षितमाख्यातश्रुतिसंयोगं शंसतीत्याख्यातेन स्तुत्याख्यस्य धात्वर्थस्य भावनाकरणत्वावगतेः करणत्वस्य च कर्त्तृव्यापारव्याप्यत्वलक्षणं कर्मत्वं विनानुपपत्तेरनिष्पन्नस्य चोत्पाद्यत्वातिरिक्तकर्मत्वायोगादुत्पाद्यत्वप्रतीतिरुत्पादिकां गुणिनीं देवतां प्रतिप्राधान्यावगतिरित्येवं व्याचष्टे * अपिचेति * किमेतत् गुणभूतं देवतां प्रत्युत प्रधानामिति सन्देहभाष्ये देवताम् प्रति स्तुतेर्गुणप्राधान्यविचारस्योक्तत्वाद्देवतया स्तुतिर्निर्वर्त्तयितव्येति वाच्ये ऽप्यभिधीयमानायाः देवतायाः स्तुतिनिर्वर्त्तकत्वादभिधानस्य च मन्त्राधीनत्वाद्भाष्यकृता * मन्त्रेणेत्युक्तम् *तद् व्याख्यातुं मन्त्रशब्दः स्तुतिमात्रोपलक्षणार्थः स्तोत्रशब्दः अनेन च गुणवचनः शब्द इति भाष्यावयवो व्याख्यातः। प्रकाशननिर्वर्त्तकत्वेनार्थवत्त्वे ऽपि दृष्टार्थत्वसाम्यात्स्तुतिविशेषणानर्थक्यमाशङ्क्य * शास्त्रदृष्टमित्युक्तम् * विशेषणसूचितं प्रकाशनार्थतायामदृष्टार्थत्वं प्रकाशनार्थत्वस्य शास्त्रेणादृष्टत्वादिति व्याख्यातुमचोदित्वकरणादित्युक्तम्। ननु प्रकाशनार्थत्वानभ्युपगमे स्तुतीनामदृष्टार्थत्वं स्यादित्याशङ्क्याह * ततश्चेति * शास्त्राङ्गीकृतत्वात् स्तुतेरदृष्टार्थत्वं युक्तं न मन्त्रस्येत्याशयः। षष्ठ्यभिप्रायेण श्रुतिसंयोगव्याख्यातार्थमपि चेति भाष्यं व्याचष्टे * किं चेति * नन्वेवमपि वीर्यादिगुणस्य द्वितीयान्वयाद्विशेष्यत्वाच्च प्राधान्योपपत्तेर्न स्तुतिप्राधान्यं सिद्ध्येदित्याशङ्क्याह * न प्रधानमिति * कर्मानङ्गत्वाद् गुणानां प्राधान्यं न युक्तमित्याशयः। देवताभिधानार्थ इति भाष्यं व्याचष्टे * देवतेति * अथ यत्प्रथमान्तमित्याशङ्क्यतइत्युच्यत इत्युत्तरभाष्यं व्याचष्टे*यदपीति* प्रथमासामर्थ्यात्मकेन लिङ्गेनेन्द्रप्राधान्यावगतेर्न वाक्येन स्तुत्यर्थता

युक्तेत्याशङ्क्य या ऽतो ऽवसितस्येत्यादेर्गुणाभिधानार्थस्य पद-समुदायस्य गुणयाकाङ्क्षस्य निराकाङ्क्षीकरणसामर्थ्यात्मकं लिङ्गं वाक्यस्योपोद्बलकमस्तीति वक्ष्यमाणं परिहारं सूचयितुम् * यो-
४।१०।१ ग्यताशब्दः * नन्वेवं सत्येकवाक्यतोपगमनसामर्थ्यात्मकस्य लिङ्ग-स्य सर्ववाक्येषु भावान्न क्व चिल्लिङ्गेन वाक्यं बाध्येतेत्याशङ्कानि-रासार्थः पूर्वशब्दः।एकवाक्यतोपगमनसामर्थ्यस्यैकवाक्यताकल्प्यत्वे-नोपोद्बलकत्वं न सम्भवतीत्यशयः । जङ्गमस्येत्यनेन षष्ठीपरशतृप्र-त्ययान्तस्य पातेर्धातोर्यात इति रूपमिति स्थितं चकाराच्छमस्य शा-न्तिकरस्योदकजातस्य शृङ्गिणः पर्वतजातस्य राजेति सूचितम्।नन्वेवं सति राजत्ववज्रबाहुत्वादीनां गुणानामेव प्राधान्यं कस्मान्नेष्टमित्या-शङ्क्य * न चेत्यु पपत्तिरुक्ता * शङ्काभिप्रायविवरणार्थं नन्विति भाष्यं स्पष्टत्वादव्याख्याय सत्यमिति भाष्यं वक्ष्यमाणस्यापि लि-ङ्गत्वानुज्ञानार्थतया ऽवभासमानं परेण तस्य लिङ्गत्वानभिधानाद-युक्तमाशङ्क्य सत्यमित्येतावच्छिनत्ति * सत्यमिति * एतदपीति भाष्यं प्रागेव योग्यताशब्देन व्याख्यातत्वात् स्पष्टत्वाच्चोपेक्ष्य तथा-पीत्याशङ्काभाष्यं वाक्यशेषादित्युत्तरभाष्यं च तात्पर्यतः सङ्क्षेपेण व्याचष्टे * तत्रेति * सत्यपीति मध्यमावयवेनाशङ्काभिप्रायो व्याख्यातः वाक्यशेषादेवेत्युत्तरे निर्णयहेत्वभिधानान्नेन्द्रशब्दो देव-ताभिधानार्थ इति निर्णयस्वरूपाभिधानात्कुत इति तसिः पञ्चम्यर्थे प्रथमार्थे च यदावृत्त्या व्याख्येयं शेषशब्देन च स्तुत्यर्थपदसमूहमा-त्रस्य सम्पूर्णवाक्यत्वाभावे ऽपि स्तुतिवाक्यस्येति वाक्यशब्दो व-ज्रबाह्वादिपदानामपि साकाङ्क्षत्वाभिधानार्थं इति सूचितम् देवता-भिधानमात्रपर्यवसाननिरासस्य स्तुत्यर्थपदसमूहैकवाक्यत्वसिद्ध्य-र्थत्वं स्तुत्यर्थत्वेनैवेति वार्त्तिकावयवेनोक्तं स्तौतिशंसत्योर्धात्वोः श्रुत्या स्तुतिवाचित्वादित्येवं श्रुतिसंयोगव्याख्यानार्थमपि चेति भाष्यं व्याचष्टे * न चेति * स्तुतेर्देवतास्वरूपाभिधानपूर्वकत्वात् स्व-रूपाभिधानमात्रपर्यवसानाभ्युपगमे स्तुत्यविवक्षापत्तेर्लक्षणाप्र-सङ्ग इत्याशयः । प्रकरणइतिसूत्रावयवमुत्कर्षाभ्युपगमनिरा-सार्थत्वेन तु ज्ञातत्वाद्भाष्यकृतोपेक्ष्य तस्मादित्यनेन स्तौतीत्यादिः सूत्रावयवो व्याख्यातस्तत्तात्पर्यतो व्याचष्टे * इतीति * पूर्वपक्षे संस्कारकर्मत्वस्योक्तत्वात्प्रतियोगितया प्रधानकर्मत्वस्य वक्तव्य-त्वात्तदेव फलेनोक्तमित्याशयः ।

शब्दपृथक्त्वाच्च ॥ २५ ॥

द्वादशेति भाष्यं संख्यापृथक्त्वयोर्भेदप्रसिद्धेः पृथक्त्वव्याख्यानाशक्तत्वादयुक्तमाशङ्क्योपपादयति * पृथक्त्वे सति निवेष्टुं शीलमस्या इति सदर्थसप्तमीसमासेन पृथक्त्वैकार्थसमवायितोक्ता स्तोत्राणां शस्त्राणां च या द्वादशसंख्या द्वादशस्तोत्रशस्त्रो ऽग्निष्टोम इत्यनेन शब्देनोच्यंते सा प्रकाशनार्थत्वपक्षे तस्याभेदे सति न युक्ता पृथक्त्वनिवेशिनी यस्मादित्यर्थः।शब्दग्रहणेन द्वादशशब्देन स्तोत्राणां-शस्त्राणां च पृथक्त्वेनाभिधानादित्येवं तृतीयासमासत्वेन सूत्रव्याख्यासूचिता शब्देन कृतात्पृथक्त्वादिति च तत्कृतार्थतृतीयासमासेनोक्ते शब्दस्याभिधानएव कारणत्वेनाभिधानालाभान्नाश्रुताभिधाने शब्दाव्यहारोपपत्तिः प्रकाशनशब्देन च भाष्यस्थयोः स्तोत्रशब्दयोः[1] प्रकाशनवाचित्वं सूचितम्। अथेति भाष्यं व्याचष्टे*सामान्येति * अनेन चैक्याभिधानं सामान्याभिप्रायमिति दर्शितं पदार्थज्ञानस्यैकैकपदजन्यत्वात्प्रतिपदम् * चेत्युक्तत् * ननु स्तुतेरपि सामान्यरूपेणैक्याद्विशेषरूपेण च प्रत्यृचं भेदादृक्समुदायस्य चैकस्तुतिसाधनत्वाभावेनावान्तरभेदविवक्षानुपपत्तेर्न द्वादशत्वे ऽवस्थानं स्यादित्याशङ्कते * ननु चेति * नन्वृक्समुदायस्यैकस्तुतिसाधनत्वाभावे ऽप्येकसमुदायसाध्यानां स्तुतिनामैक्यमुपचर्य द्वादशत्वं भविष्यतीत्याशङ्क्याह * अथेति * पदात्वाद्यपरिस्पन्दात्प्रभृत्या फललाभतः क्रिया पूर्वापरिभूता लक्ष्यते वर्त्तते तदेत्यनेन न्यायेनैकफलसाधनानेकक्रियावयवसमुदायस्यैकक्रियात्वादपूर्वार्थत्वेन द्वादशत्वेन स्तुतिद्वादशेति परिहरति * उच्यतइति * प्रकाशनार्थत्वे तु प्रत्यृचं प्रतिपदं वा प्रकाशनाख्यफलनिष्पत्तिदर्शनेन प्रत्यृचं प्रतिपदं वा तत्साधनज्ञानाख्यक्रियासमाप्त्यवगतेर्न द्वादशत्वव्यवस्थेति वैषम्याभिधानपूर्वकं श्लोकं व्याचष्टे * प्रकाशनार्थत्वे हीति * नन्वपूर्वैकैकस्तुतिजन्यत्वे तस्याः प्रत्यृचं निष्पत्तिदर्शनात्प्रत्यृचमेवापूर्वं कल्प्यं सर्वस्तुतिजन्यत्वे त्वपूर्वैक्यापत्तेर्द्वादशत्वं न स्यादित्याशङ्क्याह * न हीति * यथाविहितर्क्समुदायसाध्यस्तुतिसमुदायजन्यत्वेनापूर्वस्य समुदायद्वादशत्वात् द्वादशत्वासिद्धिरित्याशयः।

अनर्थकं च तद्वचनम् ॥ २६ ॥ ४।१।१२

अग्निष्टुत्यादिभाष्येणैतत्सूत्रं दवताभिधानत्वादित्याद्यसूत्रावयवोपात्तदेवताभिधानपरामर्शिनं तच्छब्दमङ्गीकृत्य संस्कारकर्मत्वपक्षे ऽग्निदेवत्यग्राहिकायां विकृतौ लिङ्गेनैवाग्नेयीनामृचां प्राप्तेर्देवताभिं-

[1] स्तवनप्रसनशब्दयोरितरार्थः।

धायिनीनामाग्नेयीनामृचां वचनमनर्थकमित्येवं व्याख्यातं तत् प्राकृतानामनाग्नेयीनामप्यृचां संस्कारकर्मत्वे ऽग्निपदोहेन प्राप्तावाग्नेयीविध्यर्थवत्त्वोपपत्तेरयुक्तमाशङ्क्योपपादयति * ऋचामिति * पूर्वेतिवा एतदृचो ऽक्षरं यदेनदूहति तस्मादृचं नोहेदिति निषधादृचोमूहानर्हत्वादाग्नेयीनामेव प्राप्तेर्विध्यानर्थक्यमित्यर्थः । संस्कारकर्मत्वनिरासद्वारा चास्यापि सूत्रस्य प्रधानकर्मत्वोपपादनार्थत्वान्न पूर्वोत्तरसूत्रानन्वयदोषः ।

## अन्यश्चार्थः प्रतीयते ॥ २७ ॥

कथं सम्बन्धत्वश्रुत्या स्तोत्रशस्त्ररूपस्यार्थस्यान्यत्वप्रतीतिरित्याशङ्कानिरासार्थं यद्यन्यदिति भाष्यं व्याचष्टे * सम्बन्धस्येति * अन्यत्वप्रतीतेः सिद्धान्तोपपादकत्वाभिधानार्थं यदि चेति भाष्यं सङ्क्षेपेण व्याचष्टे * स चेति * प्रकाशनार्थत्वद्वाति शेषः स्तोत्रशस्त्रसाधनभूतानां मन्त्राणां प्रगीताप्रगीतविशेषणभेदेन भेदात्तदुपाधिकः स्तोत्रशस्त्रयोर्भेदो भविष्यतीत्यधिकाशङ्कानिरासार्थं द्वादशत्वतुल्यावष्याशङ्कापरिहारावाह * नन्विति * ननु प्रकाशनस्यापि प्रगीताप्रगीतमन्त्रलक्षणोपायनियमापूर्वभेदाद्भेदो भविष्यतीत्याशङ्क्याह * नन्विति * यत्तु नियमापूर्वं सक्रियाकृतं न भवतीति वार्त्तिकेनाध्यायोपक्रमे नियमापूर्वस्य क्रियाजन्यत्वनिषेधान्न तद्भेदेन क्रियाभेदसिद्धिरित्याशयः ।

## अभिधानं च कर्मवत् ॥ २८ ॥

प्रधानकर्मणो अग्निहोत्रादेर्यथा द्वितीयासंयोगेनाभिधानं तथा शस्त्रस्यापि द्वितीयासंयोगेन भवतीत्येवं प्रधानेत्यादि भाष्येण व्याख्यातं तद्धात्वर्थस्य करणत्वेनेप्सिततमत्वलक्षणप्राधान्यायोगात् द्वितीयायाश्च करणत्वाक्षिप्तकर्त्तृव्यापारव्याप्यत्वेनाप्युपपत्तेरयुक्तमाशङ्क्योपपादयति * यदिदमिति * श्रुतायां भावनायां करणत्वे ऽप्यग्निहोत्रादेर्धात्वर्थस्याकृतः सो ऽपि नास्तीति पुनः करणवाञ्छनमित्यनेन न्यायेनार्थाक्षिप्तायां धात्वर्थनिष्पादिकायामीप्सितत्वात् प्राधान्यं युक्तमित्याशयः । नन्वेवं सति संस्कारकर्मणो ऽप्यनिष्पत्त्या प्राधान्यापत्तिरित्याशङ्क्याह * न संस्कारक्रियेति * तत्र व्रीह्यादिनिष्पाद्यस्यावघातस्य तान्प्रति गुणत्वेनावधारितस्य न तानेव प्रति प्राधान्यं युक्तमित्याशयः । चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य त्रिरितः प्राचीनं प्रयाजान्यजतीति वाक्येनाघारस्य प्रयाजा-

र्थाज्यसंस्कारत्वावगमे ऽपि मान्त्रवर्णिकदेवतान्वयापन्नयागरूपाभिप्रायं प्राधान्याभिधानं स्वरूपाधारविषयं वा यदा तु द्वितीयाभिप्रायः श्रुतिसंयोगो व्याख्यायते तदा पौनरुक्त्यापत्तेः। प्रधानकर्मण इवाभिधानं भवतीत्येतावद्भाष्यं यथा प्रधानकर्मणो नामधेयं भवति तथा स्तोत्रशस्त्रयोरपीत्येवं सूत्रव्याख्यानार्थतया व्याचष्टे * अथ चेति * ननु संस्कारकर्मणो ऽपि स्रुग्व्यापारादेर्नामधेयदर्शनान्न तेन प्राधान्यसिद्धिरित्याशङ्क्याह * इतरथा हीति * संस्कारस्य संस्कार्यनिष्ठत्वात्तदवच्छेदेनैव व्यवहारसिद्धेर्न तावत्संज्ञया कार्यं सौकार्यार्थं तु तदपेक्षयामपि दृष्टसंस्कारोपाधिक्यैव प्रकाशनसंज्ञयाबारव्यवहारसिद्धेःसंज्ञान्तरमनर्थकमित्याशयः।

## फलनिर्वृत्तिश्च ॥ २९ ॥

स्रुतस्य स्तुतमप्यूर्जस्वत्स्वदामामास्तोत्रस्य स्तोत्रं गम्यादिति मन्त्रे भावनिष्ठया स्तोत्रमामन्त्र्य स्तोत्रस्य मध्ये त्वं स्तोत्रमसि तदेवंभूतस्तोत्रस्य मध्ये स्तोत्रमूर्जस्वत्पयस्वत् भूत्वा मामागम्यादितीन्द्रशब्दोपलक्षितानेकदेवतास्तुत्येन्द्रादिदेवतावन्तः सन्तो वयं त्वां याचामहे प्रजामिषं भक्षीमहीति च याचामहे सा सर्वा यज्ञशब्दलक्षितस्य यज्ञाङ्गस्य सम्बन्धिनी ममाशीः सत्या भूयादिति स्तोत्रात् प्रधानकर्मण इव फलनिष्पत्तिर्दृश्यतइत्येवं सूत्रव्याख्यानार्थं फलेत्यादिभाष्यं व्याचष्टे * यो ऽयमिति * न देवताया इति फलव्यतिरेकसूचितमर्थं व्याचष्टे * त्वत्पक्षे त्विति * ५।१२।१

॥ अथ मन्त्राविधायकत्वाधिकरणम् ॥ ६ ॥

## विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥

सूत्रभाष्ययोर्मन्त्रग्रहणात् मन्त्रगतभावशब्दविषयत्वेनैतदधिकरणं कश्चिद्व्याख्यातं तत् दूषयितुमुपन्यस्यति * तावदिहेति * यद्याद्युपबन्धस्य ब्राह्मणे ऽपि तुल्यत्वान्मन्त्रत्वातिरिक्तविधायकत्वासम्भवहेत्वप्रतीतेर्मन्त्रग्रहणस्य हेत्वर्थत्वं मत्वा मन्त्रत्वादित्युक्तम्। प्राप्तार्थत्वाच्चेत्यनेन विहितत्वादिति भाष्योक्तो हेतुर्ब्राह्मणविहितस्य मन्त्रो ऽनुवादको मन्त्रविहितस्य वा ब्राह्मणमित्यनिश्चयादभ्युच्चयत्वेन व्याख्यातः। कर्मान्तरत्वाशङ्कानिरासार्थं नेति भाष्यं व्याचष्टे * तथा हीति * स्तुत्यर्थतायामपीत्यपिशब्दसूचितार्थव्याख्यानपूर्वकं भाष्यमुत्तरार्द्धेन व्याचष्टे *न चेति* गुणग्रहणं फलनिमित्तयोरप्युपलक्षणार्थम्। ननु विधौ ब्राह्मणे मन्त्रे च यान्याख्यातानि तेषां सर्वे-

षामेकमेव विधानरूपं प्रयोजनं ब्राह्मणे विधायकशक्तियुक्तत्वेनाव-
धारितस्याख्यानशब्दस्य मन्त्रे ऽप्यैक्येन प्रत्यभिज्ञानादिति वदता
सूत्रकृता विधायकत्वमात्रस्य पूर्वपक्षितत्वात् स्तुतित्वनिरासो ऽन-
र्थक इत्याशङ्कानिरासपूर्वकं श्लोकं व्याचष्टे * स्मारकत्वेति *
फलनिमित्तयोरविधेयत्वे ऽप्यज्ञातज्ञापनाभिप्रायेण विधीयेरन्नित्युक्तं
तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * दूषयितुमुपक्र-
मते *इतीति* मन्त्रत्वस्य तावद्धेतुत्वं दूषयति * किं पुनरिति *
ननु मन्त्रशब्देन विधिशक्त्याविर्भावहेतुब्राह्मणत्वाभावो विवक्षित
इत्याशङ्क्याह * कथं वेति * कारणाभावमेवोभयत्रापि व्यभिचार-
दर्शनेनोपपादयति * दृष्टश्चेति * एतदेवोपसंहरति * तस्मादि-
ति * प्राप्तार्थत्वस्यापि हेतुत्वं दूषयति * किं चेति * श्लोकं व्या-
४१३।१ चष्टे * न हीति * ततश्चोभयोरपि विधायकतैव युक्तेत्याह * त-
त्रेति * नन्वेकेन विहिते विध्यन्तरानर्थक्यं स्यादित्याशङ्क्याह * अ-
भ्यासाच्चेति* यच्चासकृदपीत्युक्तं तदप्ययुक्तमित्याह * बलवदि-
ति * दूषणमुपसंहरति * तस्मादिति * अन्यैस्तु मन्त्रत्वस्य वि-
धिशक्तितिरोधानाहेतुत्वे ऽपि कर्मकरणतया ब्राह्मणेन विनियुज्य-
मानत्वस्य व्रीह्यादावविधायकत्वेन व्याप्तिदर्शनाद्धेतुत्वं भविष्यती-
त्युक्तम् । तदपि दूषयितुमुपन्यस्यति * ये ऽपीति* विधायकस्यापि
ब्राह्मणस्य ब्रह्मयज्ञे ब्राह्मणेन विनियोगदर्शनात्करणत्वविशेषणे कृते
ननु ब्राह्मणमपि ब्रह्मयज्ञफलकरणत्वेनैव विनियुक्तमित्याशङ्क्य कर्म-
णामिति विशेषितम् । ननु पञ्चमे पाठाधिकरणे ऽर्थकृते वानुमानं स्या-
त्क्रत्वेकत्वे परार्थत्वात्तेन सम्बन्धस्तस्मात् स्वशब्द उच्यतइति सूत्रे
परार्थो हि वेदो यदनेन शक्यते कर्तुं तस्मै तस्मादेष समाम्नायते
शक्यते चानेन परार्थो विधातुं क्रियाकाले च प्रतिपत्तुं तस्माद्वेदः
पदार्थाश्च ज्ञातुमुपादेयः क्रियाकाले च प्रतिपत्तुमित्यादिभाष्येण ब्रा-
ह्मणस्यापि स्मारकत्वस्य वक्ष्यमाणत्वात्कर्मकरणत्वेन विनियोगो
ऽस्तीत्याशङ्क्य ब्राह्मणेनेति विशेषितं स्मारकतया ब्राह्मणस्य लिङ्गेन
विनियोगो न ब्राह्मणेनेत्याशयः । दूषयति *तैरपीति * मात्रशब्दसू-
चितं हेतोरप्रयोजकत्वं प्रश्नपूर्वमुपपादयति * कुत इति * साध्या-
भावविरोधी हेतुः साध्याक्षेपकत्वात्प्रयोजको भवति । न च विनियो-
गो विधायकत्वविरोधीत्याशयः । श्लोकं व्याचष्टे * न हीति *
विनियुक्तशब्देन श्लोकस्थौ नियोगशब्दौ विनियोगवाचितया व्या-
ख्यातौ । पूर्वश्लोके ऽप्येवमविरोधमेव पाठाधिकरणे वक्ष्यमाणेन ब्रा-
ह्मणस्योभयार्थत्वेनोपपादयति * तथा हीति * ननु ब्राह्मणस्य वि-

धायकत्वोत्तरकालं सम्बन्धित्वेन यत्सन्निधाने यो दृष्ट इति न्याया-द्विधेयस्मारकत्वावगतेर्विनियोगात्प्राग्विधायकत्वमविरुद्धं मन्त्रस्य तु प्रागेव ब्राह्मणेन विनियोगात् स्मारकत्वप्रतीतेर्विधायकत्वानुपपत्तिरित्याशङ्कानिरासस्सूचनायार्थम् * प्रथममित्युक्तम् * अर्थत्वेन प्रतिपाद्यत्वेन स्मार्यत्वं तच्च विधानात्प्रागप्यस्तीत्याशयः। ननु मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः स इत्यस्मिन्नधिकरणे मन्त्रस्य कर्मकालप्रयोज्यत्वाद्रूपेणाभिधानेनैव कर्मप्रयोगे ऽनुष्ठाने सामर्थ्यात्स्मारकत्वावगतेः स्मृतिकार्यत्वेन चानुष्ठानस्य स्मृतिक्रमेण क्रमस्य न्याय्यत्वान्मन्त्रब्राह्मणपाठक्रमयोर्विरोधे मन्त्रपाठक्रमानुरोधेन पश्चाद्विहितस्याप्याग्नेयस्य प्रागनुष्ठानमित्युक्ते ननु च ब्राह्मणपाठस्यापि तदेव दृष्टमनुष्ठेयस्मरणं प्रयोजनमित्याशङ्क्योत्पत्तिदेशः स इति सूत्रावयवेन कर्मोत्पत्तिमात्रार्थो ब्राह्मणपाठ इति वक्ष्यमाणत्वात् पाठाधिकरणे ब्राह्मणस्य विधिस्मृत्याख्यप्रयोजनद्वयार्थत्वाभिधानं भाष्यकारीयमनादृतमित्याशङ्क्याह * मन्त्रतस्त्विति * प्रभृत्यर्थेनेतिकरणेनोत्पत्तिदेशः स इति सूत्रावयवः परामृष्टः उत्पत्तिदेशः स इति यत्सूत्रकृद्वक्ष्यति तदत्र विरोधे सति न त्वविरोधे ऽपीत्यर्थः। ननु ब्राह्मणस्य शक्त्यालोचनया स्मारकत्वावगमे ऽपि कर्मानुवादेनाविनियोगान्न कर्मविधायित्वं विरुध्यते मन्त्रस्य तु कर्मानुवादेन तत्स्मारकतया वचनेन विनियोगात्कर्मविधायित्वानुपपत्तिरित्याशङ्क्याह * ये चेति * वाचस्तोमादौ सर्वमन्त्राणां वचनेन विनियोगे ऽपि स्वार्थविधायित्वाविरोधाद् यस्मिन्कर्मणि यो मन्त्रो विनियुज्यते तत्कर्मविधायिता तस्य विरुध्येतेति वाच्यम्। न च सर्वमन्त्राणां स्वाभिधेये कर्मणि विनियोगो ऽस्तीत्याशयः। उदाहृत एव हि तावन्मन्त्रो ऽनुवन्ध्यपशुपुरोडाशानुनिर्वाप्यः देवीहविर्यागे चरुद्रव्यके गोदेवत्ये याज्यात्वेन विनियुक्तः। न चानेन गोदेवत्यं कर्माभिधीयते यागे गवां करणत्वाभिधानाद्दाने च सामर्थ्यात्कर्मतयान्वयावगतेरतो गोदेवत्ये यागे वाचनिकविनियोगसद्भावे ऽपि गोद्रव्यकयागदानविधायिता न विरुध्यते यदि वात्र मन्त्रो विधायको न वेति चिन्त्यते ततः प्रकृताख्यातशब्दचिन्ता सङ्गतिर्न स्यादित्याह * न चेति * मन्त्रब्राह्मणसाधारणयद्यानुपबन्धाख्यातशब्दविषयत्वेनाधिकरणं स्वमतेन व्याख्यातुमुपक्रमते * इतीति * गुणप्रधानकर्मविधायकत्वेन द्विविधमित्यपि वाच्ये लक्षणयैकदेशेन तदर्थलाभात् विधायकशब्दानुक्तिः। ननु तृतीये ऽपि प्रकारे व्युत्पाद्ये प्रागेव तानि त्रैधं गुणप्रधानानीति सूत्रं कस्मान्न कृतमि-

त्याशङ्क्य द्वैविध्योक्त्यनन्तरमेव तृतीयप्रकारोक्तेः प्रसङ्गो न प्रागिति इदानीं शब्दसूचितमर्थमुपपादयितुं पूर्वप्रकृतापेक्षित्ववाच्यथशब्दः प्रयुक्तः। विधायकत्वमात्रप्रतियोगित्वेनाविधायकत्वस्य विधायकद्वैविध्यमनपेक्ष्य तृतीयत्वं न सम्भवतीत्याशयः। विधिशक्तियुक्तत्वेनावगतस्य लिङादेर्यच्छब्दाद्युपबन्धे ऽपि प्रत्यभिज्ञानाद्यदाग्नेयो ऽष्टाकपाल इत्यादौ यच्छब्दाद्युपबन्धे ऽपि विधित्वाभ्युपगमाद्यच्छब्दाद्युपबन्धस्य विधिशक्तिप्रतिबन्धकत्वानुपपत्तेरभिधायकत्वाख्यप्रकारान्तराभावाभिधानार्थतया पूर्वपक्षसूत्रं व्याचष्टे * तत्रेति * प्रकारान्तरव्युत्पादनार्थत्वेनापि वा प्रयोगसामर्थ्यान्मन्त्रो ऽभिधानवाची स्यादिति सिद्धान्तसूत्रमवतरणपूर्वं व्याचष्टे * तथेति * अभिधानातिरिक्तप्रेरणाख्यव्यापारनिषेधार्थमभिधानकारीति वाच्ये करोत्यर्थे तत्साधुकारित्ववाचिना णिनिप्रत्ययेन विवक्षित्वा प्रत्ययानुग्रहार्थं कस्मिंश्चिद्धातौ प्रयोज्ये ऽनुवादार्थो वचिः प्रयुक्त इत्येवमभिधानवाचीति सूत्रावयवार्थं सूचयितुं विधायकत्वाभावो ऽभिधायकशब्देनोक्तः। केषामाख्यातानां विधायकत्वाभावः कश्च तत्र हे-
४।१।४।२ तुरित्यपेक्षायामाह * पश्येति * सिद्धत्वद्योतनाद्वक्त्राभिमुख्यासम्भवाद्विधौ।

आत्मनि प्रेरणायोगान्निमित्तत्वाभिधानतः।
विधिशक्तिविहन्तृ स्याद्यच्छब्दादिचतुष्टयम्॥
प्राप्त्ययोगे ऽपि तत्रापि क्व चित्स्यादपि हन्तृता।

श्लोकं व्याचष्टे*मन्त्रेति*एतदेव प्रपञ्चयति *तत्रेति*याभिर्गोभिर्यजते याश्च ददाति ता गावो न नश्यन्ति न च तस्करो हरति न चासां कं चिद्व्ययवममित्रकृतो व्यधिरुपद्रवः पीडयति गोस्वामी च ताभिः सह ज्योक् चिरकालं स च ते संसक्तः संयुक्तो भवतीति गोस्तुत्यर्थे मन्त्रे गोयागगोदानयोर्यच्छब्देन सिद्धवद्भावाभिधानाद्विधायकत्वोपघातः वक्त्रभिमुखकरणार्थे या चामन्त्रणविभक्त्या लिङादेः समान्यतो वक्त्राभिहितार्थानुष्ठानप्रवृत्तवक्त्रभिमुखपुरुषप्रवर्त्तकत्वावगमादप्रवृत्तप्रवर्त्तनात्मकाविधिशक्तिविघातः बर्हिर्देवसदनं दामि शुक्रं त्वा शुक्राय धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामीत्यस्मदर्थेनोत्तमपुरुषेणात्मनि प्रवर्त्तनानुपपत्तेर्निमित्तत्ववाचिना च यदिशब्देन प्राप्तिबुद्धेरित्याशयः। नन्वविशेषेण मन्त्रब्राह्मणगतानां यच्छब्दाद्युपबद्धानामाख्यातानां विचार्यत्वे सूत्रभाष्ययोर्मन्त्रोदाहरणमयुक्तमित्याशङ्क्याह * न चेति * यच्चोत्तरसूत्रे मन्त्राणामविधायकत्वं प्रायिकमिति भाष्यकृद्वक्ष्यति तत्रामन्त्रणविभक्त्या-

दियाहुल्यमेव कारणमिति प्रसङ्गादाह * अविधायका इति * ते विधिशक्त्युपघातका यच्छब्दादयः प्रायेण मन्त्रेष्वित्येव हेतोरसावध्येतृप्रसिद्धिरित्यर्थः । यश्च ब्राह्मणो विधिशब्दश्चेति मन्त्राधिकरणान्त्यसूत्रादौ विधिमन्त्रयोरित्यत्र च विधायकत्वव्यपदेशस्तत्रानुपहतविधिशक्तिप्रत्ययवाहुल्यं कारणमित्याह * ब्राह्मणे त्विति * ब्राह्मणानुदाहरणे वा विधायकाल्पत्वमेव कारणमित्यर्थादुक्तमपि स्पष्टीकर्त्तुमाह * अल्पे त्विति * ब्राह्मणस्य तु विधायकत्वे ऽनुपहते विधिशक्तित्वमेव कारणं न ब्राह्मणत्वं कारणं किन्तूपहतविधिशक्तितेत्याह * विधायकत्वेति * न मन्त्रस्याविधायकत्वहेतुत्वाभावे मन्त्रविशेषणानर्थक्यं स्यादित्याशङ्क्यां निरस्यन् प्रयोगसामर्थ्यादिति सूत्रावयवं व्याचष्टे * तत्र त्विति*यथाद्युपबन्धत्वरूपान्निमित्तादिप्रत्यायनार्थत्वावगतेः स्वयमविधायकत्वे ऽप्येकां गां दक्षिणां दद्यादित्याद्याख्यातां तदेकवाक्यत्वेन विधिप्रयोजनत्वात्प्रयोगसामर्थ्यभावाच्च न ब्राह्मणगतानामाख्यातानामभिधानमात्रपर्यवसानम् । मन्त्रगतानां तु विधायकैकवाक्यत्वाभावेन निमित्तादिप्रत्यायनार्थत्वानवगमात्प्रयोगसामर्थ्याच्चाभिधानमात्रपर्यवसानमित्याशयः । प्रयोगसामर्थ्यमेव प्रश्नपूर्वमुपपादयितुं मन्त्राधिकरणोक्तमनुष्ठेयार्थस्मारकत्वं तावत् स्मारयति * कुत इति * श्लोकं व्याचष्टे * न तावदिति * यश्चास्माभिर्यच्छब्दाद्युपबन्धेन विधिशक्तिविघातो ऽभिहितस्तत्रैव भाष्यमपि प्रतिज्ञापूर्वं योजयति * भाष्यमपीति *

॥ अथ मन्त्रनिर्वचनाधिकरणम् ॥ ७ ॥

## तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

मन्त्रगत इति भाष्येण मन्त्रलक्षणस्य प्रासङ्गिकत्वेन सङ्गतिमुक्त्वोच्यतइत्यनेन मन्त्रलक्षणात्प्राकद्गताख्यातविचाराशक्तिमाशङ्क्येदमित्यनेनार्थतो विपरीतक्रमतोक्ता साऽनाहत्येत्याह * यथोक्तेनेति * भाष्यकृतानुमन्त्रत्वस्याविधायकत्वाप्रयोजकत्वे ऽप्यभिधानमात्रपर्यवसानस्य विध्येकवाक्यत्वाभावेन मन्त्रेष्वेव भावान्मन्त्राणामेव पूर्वाधिकरणोदाहरणत्वं मत्वा विपरीतक्रमतोक्तेत्याह * भाष्येति * चुदेः प्रेरणार्थत्वात्प्रयोजनस्य च प्रेरकत्वात्प्रयोजनवाचिनं चोदकशब्दमङ्गीकृत्य तच्चोदकेष्विति सूत्रावयवं स्वयं तावद्व्याचष्टे * तच्चोदकेष्विति * या तु भाष्यकृता प्रवृत्तिकारणवाचिनः चोदकशब्दस्य लक्षणया कारणमात्रार्थवाचित्वमङ्गीकृत्य तच्छब्दव्याख्यानायामिधानस्येति षष्ठ्युक्ता सा लक्षणा दोषाद-

भिधानकारणत्वस्य च ब्राह्मणे ऽपि भावेनातिव्यापकत्वापत्तेरयु-
क्तेति कारणस्य कार्यप्रयोजनत्वाद्विवक्षिताभिधानप्रयोजनकत्वरू-
४१६।। पार्थप्रदर्शनार्थैवेत्याह *अर्थेति * षष्ठीसमासप्रदर्शनार्थत्वानिवृत्त्यर्थो
मात्रशब्दः असियुक्ता इति भाष्यावयवेन मन्त्राख्येति सूत्रावयवं व्या-
ख्याय ननु लक्षणसूत्रे वृद्धप्रयोगाभिधानमनर्थकमित्याशङ्क्य प्रायि-
कमित्यादिभाष्येण प्रयोगोपलक्षणार्थमेवेदं लक्षणमित्युक्तं तद्व्याचष्टे
*अध्येत्रिति * ननु वृद्धप्रयोगगम्ये मन्त्रशब्दार्थे लक्षणाभिधानम-
नर्थकमित्याशङ्क्य न शक्यमिति भाष्येण लक्षणं विना साकल्येन प्र-
योगविषयाज्ञानाल्लक्षणार्थवत्वोक्ता तत्र पृष्ठा कोटशब्दं व्याचष्टे *
धरणीति * तच्छब्देनेतिकरणसूचितकुटिलीकरणजन्यक्लेशपरा-
मर्शात्पृष्ठा कोटजन्यक्लेशसामान्येन प्रत्येकं मन्त्रपदप्रयोगविषया-
लोचनस्य पृष्ठस्याकोटः । कौटिल्यं वक्रत्वम् । अस्मिन्निति पृष्ठाकोटश-
ब्देनाभिधानमित्यर्थः । ऋषयो ऽपीति श्लोकस्य न शक्यमित्यनेन पौ-
नरुक्त्यमाशङ्क्य ननु पदार्थान्तराणां प्रत्येकनिरूपणाशक्तावपि मन्त्र-
पदार्थानामध्येतृपरम्परया प्रत्येकं निरूपयितुं शक्यत्वाल्लक्षणानर्थ-
क्यमित्याशङ्कानिरासार्थत्वसूचनार्थं पदार्थशब्दस्थाने लक्ष्यपदप्रक्षेपेण
प्रतिज्ञापूर्वं पठति * श्लोकश्चेति * विप्रकीर्णानेकशाखागतानां सा-
कल्येनोपसंहारो न शक्य इत्याशङ्कानिरासाशयः । नन्वभिधानप्रयो-
जनत्वस्य मन्त्रलक्षणत्वे किमिति वृत्तिकारेणास्यन्तत्वादिमन्त्रलक्ष-
णमुक्तमित्याशङ्क्योदाहरणमित्यादिभाष्येणास्यन्तादेः स्वमतेनोदाह-
रणत्वमुक्त्वा तच्चेत्यनेन तच्छब्देन लक्षणं परामृश्य यदिदमस्यन्ता-
दिवृत्तिकारेण तल्लक्षणमाख्यातं तदुदाहरणमिषेण न तु परमार्थतो
लक्षणम् * प्रायिकत्वादित्युक्तम् तद्व्याचष्टे * वृत्ताविति * य-
देतेषां मन्त्राणामस्यन्तत्वादिलक्षणं वृत्तावुक्तं स मन्त्राणामुदाह-
रणविस्तरो मतो न तु वस्तुतो लक्षणं प्रायिकत्वादित्यर्थः । आयु-
र्दा अस्यायुर्मे देहीत्याशिषम् । अग्निर्मूर्द्धा दिवः ककुदिति स्तुतिमेको
ममैका तस्य यो ऽस्मान् द्वेष्टि यं च वयं द्विष्म इति संख्यां च
च स्पष्टत्वादव्याख्यायाक्षीत्यस्य तु विग्रीवो वयोदर इत्यादिवदिन्द्र-
स्तुत्यर्थत्वोपपत्तेः । प्रलपितत्वानुपपत्तिमाशङ्क्य स्तुत्यसम्भवसूचना-
र्थं डुलिशब्दं व्याचष्टे* डुलिरिति*अम्बे ऽम्बिके ऽम्बालिके न मा न-
यति कश्च न स सस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीमिति सु-
कल्याणरूपां काम्पिलदेशवासिनीं मां न कश्चिन्नयति कुत्सितो ऽश्वः
स्वपितीति किशोर्याः परिदेवनम् अग्नीदग्नीन्विहरेति प्रैषं को ऽसि
कस्यासि को नामासि यस्य ते नाम मन्महि यं त्वा सोमेनातीतृपा-

मेत्यन्वेषणं पृच्छामि त्वा परमन्तं पृथिव्या इति पृष्टमियं वेदिः परो अन्तः पृथिव्या इत्याख्यानं च स्पष्टत्वादव्याख्यायाच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरित्यनुषङ्गविषयमाह * प्रतीति*प्रयोगमुदात्तानुदात्तस्वरिताख्यत्रैस्वर्यरूपत्वेन सन्नतराधिकं चातुःस्वर्यरूपत्वेन च भाष्यकृता व्याख्यातत्वादव्याख्याय सामर्थ्यस्याव्यापारत्वाद्व्यापारवाचिनाभिधानशब्देन व्याख्यानानुपपत्तिमाशङ्क्याभिधानशब्दं शक्तिविषयत्वेन व्याख्यातुमाह * सामर्थ्यमिति * लक्षणत्वासम्भवोपपादनायास्यन्तत्वान्तयोरव्याप्त्यभिधानार्थत्वेनासिमध्या अपि चेत्यादिभाष्यं स्पष्टत्वादव्याख्यायाशीरित्यादावतिव्याप्त्यभिधानार्थत्वेन परिदेवनप्रैषौ व्याचष्टे* ये मामिति* किं जानाति भवान् किं शाखावतीं सूर्मिमित्यस्यार्थस्य पृष्टशब्दादेव ज्ञातत्वात् सूर्मिशब्दमात्रार्थं व्याचष्टे * कर्णवन्तीमिति * भाष्यशेषः स्पष्टत्वान्न व्याख्यातः। मन्त्रप्रतिपत्तेः प्रयोजनापेक्षायामस्तीत्यनेनाहे बुध्निय मन्त्रं मे पाहि यमृषयस्त्रयीविदो विदुः ऋचो यजूंषि सामानि सा हि श्रीरमृता सतामित्यादौ वेदे प्रयुक्तस्य मन्त्रशब्दस्यार्थज्ञानं प्रयोजनमुक्तम् ।

॥ अथ ब्राह्मणनिर्वचनाधिकरणम् ॥ ८ ॥

## शेषे ब्राह्मणशब्दः ॥ ३३ ॥

यदि वेदप्रयुक्तमन्त्रशब्दार्थज्ञानार्थं मन्त्रलक्षणमुक्तं तर्ह्येतत् ब्राह्मणान्येव पञ्चहवींषि भवन्ति यद्ब्राह्मणकानीतराणीत्यादौ वेदप्रयुक्तब्राह्मणशब्दार्थज्ञानार्थं ब्राह्मणस्यापि लक्षणं वक्तव्यमित्यथेति भाष्येण पूर्वप्रकृतापेक्षित्ववाच्यथशब्दयुक्तेनाशङ्क्य तन्निरासार्थत्वेन सूत्रव्याख्यानार्थं मन्त्राश्चेति भाष्यमिति वक्तुं सूत्रस्य मन्त्रव्यतिरिक्तरूपब्राह्मणलक्षणाभिधानार्थत्वप्रतीतेः । सूत्रदूषणार्थमिति शङ्कामुपन्यासपूर्वकमुपन्यस्यति * परिशेषेति * सूत्रे शेषशब्दप्रयोगात्परिशेषशब्देन तद्व्याख्याप्रतीतेस्तद्भाष्यं लक्षणावक्तव्यत्वाभिधानार्थत्वेन सूत्रस्य व्याख्यानमेवेत्युक्ते ननु शेषशब्देन मन्त्रव्यतिरिक्तत्वरूपलक्षणाभिधानान्न लक्षणावक्तव्यत्वं सूत्रेणोक्तमित्याशङ्क्य * लक्षणेत्युक्तम् । मन्त्रव्यतिरिक्तत्वमात्रस्याब्राह्मणे ऽपि भावान्मन्त्रव्यतिरिक्तवेदत्वं लक्षणं वाच्यं तच्च द्विविध एव वेद इति जानतानुक्तस्यापि ज्ञातुं शक्यत्वादजानता तूक्ते ऽपि लक्षणे कल्पादेरपि मन्त्रव्यतिरिक्तत्वेन कतमत् ब्राह्मणमिति ज्ञातुमशक्यत्वादव्याच्यमित्याशयः। ननु लक्षणपरत्वाभावे सूत्रानर्थक्यं स्यादिति श-

ङ्क्ते * किमर्थं पुनरिति * तृतीयप्रकारनिरासार्थत्वेनानर्थक्यं परिहरति * नेति * ननु ब्राह्मणलक्षणस्यावचनीयत्वे किमिति वृत्तिकारेणेति करणबाहुल्यादिलक्षणमुक्तमित्याशङ्कानिरासार्थे वृत्तिकारस्त्विव्त्यादिभाष्ये यदेनमधिनोत्तद्दध्नो दधित्वमिति यस्मात्सान्नाय्यमिन्द्रमधिनोत्तस्मात्तद्दधीति धिनोतेः प्रीतिकर्मणो दधिशब्दनिर्वचनम् । उपवीता वा एतस्याग्नयो यद् ब्रह्मा सामानि गायतीति सामगाने विलम्बेनाग्निविगमापत्तेर्निन्दा प्रशंसादीनि चावयवव्युत्पत्त्यादिरूपेण प्रसिद्धत्वादव्याख्याय परकृत्यादिशब्दान् व्याचष्टे *

४१७।१ एकेति* एकः कर्त्ता यस्मिन्नुपाख्याने विषय इति समासार्थः । बहुकर्तृकमित्यत्राप्येवं ब्राह्मणलक्षणस्य विवक्षितत्वाद्विधिशब्दानुपपत्तिमाशङ्क्य व्याचष्टे * विधीति * इति करणबाहुल्यादीनां द्वादशानां मध्ये सत्यं ज्ञानमनन्तं ब्रह्मेत्यादौ कस्य चिदभावादव्यापकत्वेनालक्षणत्वाभिधानार्थमेतदपीति भाष्यमिति करणेत्यादिचातिव्याप्त्यभिधानार्थं स्पष्टत्वान्न व्याख्यातम् । तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः तमूहथुर्नौभि रात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिरित्यस्यैवमाख्यायिकासरूपत्वं हे अश्विनौ तुग्रो नाम कश्चिद्राजा भुज्युनामानं स्वपुत्रमुदमेघे समुद्रे अवाहाः वाहयामास इति तिङां तिङो भवन्तीति प्रथमपुरुषार्थमध्यमः प्रसिद्धिद्योतनार्थो हकारः नकारस्योपमार्थत्वाद्यथा कश्चिन्मृवानासन्नमरणो रयिं धनं समुद्रे वाहयतीति दृष्टान्तः तं भुज्युमात्मन्वतीभिः दृढाभिरन्तरिक्षप्रुद्भिराकाशगामिनीभिरपोदकाभिर्निजलाभिर्नौभिर्युवामूहथुः समुद्रादुत्तरयामासथुरिति इन्द्रवायू इमे सुता उपप्रयोभिरागतमिति पूर्वार्द्धेन हे इन्द्रवायू इमे सोमा अभिषुताः तानत्तुं प्रयोभिरन्नैर्यजमानाय देयैः सह युवामागतमित्युक्ते यस्मादिन्दवो वां युवामुशन्तीच्छन्तीतिहेतुः यत्प्रेषिता वरुणेन ताः शीभं समवला तत्त्वाप्नोदीन्द्रो वोयतीस्तस्मादापो अनुष्ठनेति हे आपो यस्मात्ता यूपं वरुणेन प्रेषिताः सत्यः शीभं स्वाच्छन्द्यं समवला तव लानमकुर्वतः तच्च यतीः कुर्वतीर्वो युष्मानिन्द्र आप्नोत्तस्मादापः स्थ न भवथेत्यन्वर्थसंज्ञात्वद्योतनार्थानुशब्दयोगादपशब्दनिर्वचनमिति ज्ञातुं शक्यत्वान्न निर्वचनमित्युक्तं मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादीत्येव निन्दा यः केवलम् एकाक्यत्ति न त्वर्यमशब्दोपलक्षितं देवगणं सखायं च मनुष्यगणं पोषयति स मन्दप्रज्ञो निष्फलमन्नं लभते न तस्यान्नं फलदं भवति प्रत्युत चौराद्युपद्रवहेतु-

स्वाद्धयकार्येव भवति केवलपापश्च सम्भवति सत्यमेतद् ब्रवीमीति। अग्निर्मूर्द्धा दिव इति द्युमूर्द्धत्वादिगुणकीर्त्तनात्प्रशंसा तिरश्चीनो विततो रश्मिरेषामधः स्विदासीदुपरिस्विदासीदित्येषां कवयो मनीषेति पूर्वस्यामृचि निर्दिष्टानां कवीनां रश्मिः तिरश्चीनो विततः किमध आसीदुतोपरीति स्विच्छब्दयोगात् प्लुत्या च संशयः। तृणीयादिन्नाधमानायतव्यानिति भोज्यान्पदार्थान्याचमानाय दद्यादिति विधिः चित्र इद्राजा राजका इदन्यकेत्यकेसरस्वतीमनुपर्जन्य इव ततनद्धि वृष्ट्या सहस्रमयुता ददादिति हे राजकाश्चित्रो नाम राजा सरस्वतीदेशे ऽन्यस्मिंश्च यस्मिन्कस्मिंश्चित्पुण्यदेशे सहस्रं गवामयुतानि दत्तवानित्येकचरितोपाख्यानं परकृतिः यज्ञेन ज्योतिष्टोमादिना विष्णुर्वै यज्ञ इति श्रुतिर्यज्ञं विष्णुमयजन्त देवा इति बहुचरितोपाख्यानं पुराकल्पः।

॥ ऊहाद्यमन्त्रताधिकरणम् ॥ ९ ॥

## अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥३४॥

वेदस्य द्वैराश्यनियमे सत्यूहादेरप्यनुमानादिगम्यवेदत्वाभ्युपगमात् विधिप्रयोजनत्वाभावेन च ब्राह्मणत्वाभावान्मन्त्रत्वप्रसङ्गे पठ्यमानवेदविषयत्वं द्वैराश्यनियमस्य वक्तुमेतदधिकरणमिति ब्राह्मणलक्षणावक्तव्यत्वाभिधातव्यवधेरदोषत्वं स्पष्टत्वादनभिधायाधिकरणविषयं व्याचष्टे * सूर्यायेति * प्राकृतस्थानपतितपदार्थान्तरकार्यगः उहः प्रयोगो विकृतावूह्यमानतयोदित इत्यग्निपदस्थाने सूर्यपदप्रयोगस्य विकृतत्वादूहत्वं यत्र शब्दे काश्यपावत्सारनैध्रुवेत्यादावार्षेयत्रयं कीर्त्यते स प्रवरः देवदत्तस्य पिता यजत इत्यादि यजमानपुत्रादिनामग्रहणं सूक्तवाकादावाशास्ते ऽयं यजमानो ऽसावसावित्यादिसर्वनामयुक्तमन्त्राम्नाने नामधेयस्य मन्त्रताया वक्ष्यमाणत्वात् सर्वनामस्थाने प्रक्षेप्य नामधेयव्यावृत्त्यर्थम् * यथेत्युक्तम् * पूर्वपक्षसिद्धान्तौ यथाभाष्यं स्फुटत्वात् संक्षिपति * तेषामपीति*भाष्यानुक्तो ऽपि मन्त्रमध्यपातो हेतुः सम्भवादुक्तः। मन्त्रमध्यपातस्य हेतुत्वशङ्कोत्प्रेक्षामात्रत्वादयुक्तेत्याशयः। ऊहादिभ्रेशे मन्त्रभ्रंशनिमित्तप्रायश्चित्ताभावचदूहितपदवतो वाक्यस्य समस्तस्यामन्त्रत्वात् मन्त्रनिमित्तशब्दविकाराभावो ऽपि कस्मात् सिद्धान्तप्रयोजनत्वेन भाष्यकृता नोक्त इत्याशङ्कानिरासार्थं स्वयं चिन्तान्तरं प्रस्तौति * किं पुनरिति * पूर्वपक्षमाह * समस्तस्येति * श्लोकं व्याचष्टे * सम्प्रदायेति * मन्त्रैकदेशे मन्त्रत्वसंज्ञाभ्युपगमे ऽतिप्र

सक्तिरित्याह * अथेति * पूर्वपक्षप्रयोजनमाह * तस्मादिति * एतदेव प्रपञ्चयति * अतश्चेति * तस्योहवतो वाक्यस्य न केवलमूहितावयवमात्रवर्त्तिनि निमित्तांशे मन्त्रभ्रंशनिमित्तप्रायश्चित्ताभावः। किं तु सर्वावयववर्त्तिनीत्येकं तावत्प्रयोजनं मन्त्रे श्वेतवहोक्थशस्पुरोडाशो विवनित्यादिना यावन्तः श्वितवा दतुत्कशाः पुरोडा इत्यादयो मन्त्रविषयत्वेन ह्यग्रहोर्भः छन्दसीत्यादिना चाम्नातवेदाख्यछन्दोविषयत्वेन आन्यं दिवो मातरिश्वा जभार इमामगृभ्णान्नित्यादयो यावन्तः शब्दविशेषाः स्मर्यन्ते तेषामभावाच्छ्वेतवाहउक्थशंसः पुरोडाशो जहार अगृह्णन्नित्यादिलौकिकप्रयोगः कार्य इति द्वितीयमिति दृष्टान्तदार्ष्टान्तिकव्याजेन प्रयोजनद्वयमुक्तम् सिद्धान्तमाह * अ-
४।१८।२ त्रेति * ऋगादिजातिवन्मन्त्रजातेरप्यभावाद्रचनाविशेषाभिप्रायो गोत्वानिदर्शनायाकृतिशब्दः। यथा द्वित्रिवृक्षोपजनापाये ऽपि तदेवेदं वनमिति प्रत्यभिज्ञानात् पूर्ववनाविनाशस्तथात्रापि स एवायं मन्त्र इति प्रत्यभिज्ञानान्मन्त्राविनाश इत्याशयः। श्लोकं व्याचष्टे * न हीति * प्रत्यक्षोपलम्भमेव व्यवहारेण द्रढयति * तथा हीति * याज्यान्तप्लुतविधौ वर्णविकारः इरापदविधौ गिरापदलोपाद्वर्णलोपः उदात्तानुदात्तस्वरितानामत्यन्तसन्निकर्षलक्षणैकश्रुत्यविधौ स्वरान्तरनियोगः। श्लोकं व्याचष्टे * यत्रेति * न तु यथा व्योमन् ब्राह्मणास इत्यादिपदे वर्णलोपागमादिविधिना न्यूनाधिक्ये ऽपि पूर्वावगतार्थाभिधानशक्त्यविघातावगमात्पूर्वपदाविनाशस्तथेहापीरादिविधिना मन्त्रस्य पूर्वावगतार्थतात्पर्याविघातावगमान्मन्त्रत्वाविनाश इत्याशयेनाशङ्कते * स्यादिति * एवं तर्ह्यूहादावपि पूर्वावगतकर्मसमवेतदेवताभिधानाद्यर्थत्वाविघातेनोहितपदवतो ऽपि मन्त्रस्याविनाशापत्तिसाम्यादेतत्कारणत्वानुपपत्तेर्विहितत्वमात्रं मन्त्रत्वाविनाशकरणं वाच्यं तच्चामन्त्रे ऽपि व्रीह्यादौ विहितत्वादकारणमित्याशयेन परिहरति * तदिति * अस्तु तर्हि इरापदादिमतो वाक्यस्यामन्त्रतेत्याशङ्क्याह * न चेति * एवं कतिपयवर्णपदान्यत्वे ऽपि मन्त्रत्वाविनाशे स्थिते प्रसङ्गादूहादिवैषम्येणेरापदादेर्मन्त्रत्वं वक्तुं पूर्वपक्षं दर्शयन्ननन्तरमुपसंहरत्यतश्चेति। सिद्धान्तमाह * न चेति * गिरापदवन्मन्त्राम्नानमात्रालोचनेनेरापदस्यामन्त्रत्वप्रतिभाने ऽपि इरापदविध्यालोचनान्मन्त्रत्वावधारणेति समस्तेत्यनेनोक्तम्। नन्वेवं सतीरापदेन गिरापदस्य बाधात् सामाम्नायावगतमन्त्रत्वं विरुध्येतेत्याशङ्कानिराससूचनायेह स्वाध्यायकाले गिरापदवान्मन्त्र इह प्रयोगवेलायामिरापदवानित्युक्तम्। इह गिरापदं मन्त्रे इहेरापदमिति वा-

च्ये मन्त्रभ्रेषनिमित्तप्रायश्चित्तविषयत्वमात्रप्रदर्शनार्थं पदस्य मन्त्रतोक्ता। वस्तुतस्तु वाक्यस्यैव मन्त्रत्वं न पदस्येति सूचयितुम्*पदवानित्युक्तम्* नन्वमन्त्रस्यापि व्रीह्यादेर्विधिदर्शनात्तत्कथं विध्यालोचनान्मन्त्रत्वावधारणेत्याशङ्क्याह *एवेत्युक्तम्* विधेः प्राग्विधेयसमर्पणाम्नानवेलायामित्यर्थः। आम्नानेन मन्त्रत्वं न विधिमात्रेणेत्याशयः। परस्त्वैरमित्यनेनेरापदस्य स्वरूपेणाम्नानाभावादुच्चार्यत्वेन विधानमाम्नानं वाच्यं तच्चोहादेरप्यस्तीत्याशयेन साम्यमाह *यद्येवमिति* निष्कृष्टस्येरापदस्याम्नानाभावे ऽपि त ४।१९।१
द्धितान्तपदान्तर्गतस्याम्नानमस्तीत्याशयेन सिद्धान्ती निरस्यति *नेति* वैदिकशब्देनाम्नानमभिप्रेतम्। श्लोकं व्याचष्टे *वैदिकं हीति* ननु न्यायेनाप्युच्चार्यत्वेनैकल्पत्वादुच्चारणस्यैवाम्नानत्वादस्त्येवोहस्याम्नानमित्याशङ्कानिरासूचनार्थत्वेनोत्तरार्द्धं व्याख्यातुम् *न चेत्युक्तम्* परस्तु वेदप्रमेयत्वं वैदिकशब्देनोक्तमिति भ्रान्त्या पुनः साम्यमाशङ्कते *ननु चेति* सिद्धान्ती स्वाशयं प्रकटयति *अत्रेति* नन्विरापदस्याप्युच्चारणीयरूपेणाम्नानं नास्तीत्याशङ्क्योच्चारणीयनिष्कृष्टरूपानाम्नाने ऽपि तद्धितान्तर्गताम्नानादूहादिवैषम्यमाह *तत्रेति* नन्वेवं सति सूर्यशब्दस्यापि तद्धितान्तपदान्तर्गतस्याम्नानमस्तीति पुनः साम्यमाशङ्कते *नन्विति* उच्चारणीयत्वोपपादनाय *श्रुतीत्युक्तम्* सूर्यशब्देन देवतामुद्दिश्य हविस्त्यजेदित्युच्चार्यत्वेन विनियोगान्न व्रीह्यादितुल्यतेत्याशयः। मन्त्राख्यवाक्यावयवत्वेन पदस्य मन्त्रत्वान्मन्त्रावयवत्वेनाम्नानं मन्त्रत्वे हेतुः। न च तत्सूर्यादिपदे ऽस्तीति परिहरति *नेति* एतदेवोपसंहरति *तस्मादिति* मन्त्रावयवत्वेन सूर्यादिपदानां विनियोजकानाम्नानान्मन्त्रावयवत्वेनाम्नानं नास्तीत्यमन्त्रतेत्यर्थः। नन्वेवं सत्यग्ने महाँ असि ब्राह्मण भारतेत्यादिमन्त्रावयवत्वेन प्रवरविध्याम्नानात् सुब्रह्मण्यानि निगदावयवत्वेन च नामविध्याम्नानयोर्मन्त्रत्वं स्यादित्याशङ्कते *नन्विति* मन्त्रत्वहेतुं स्वरूपाम्नानसिद्ध्यै तद्विध्याम्नानस्योक्तत्वात् स्वरूपाम्नानरहितं विध्याम्नानं न हि मन्त्रत्वहेतुरित्याशयेन परिहरति *स्यादिति* नन्वेवं सत्याशास्ते ऽयं यजमानो ऽसावित्यादिसर्वनामसंयुक्तमन्त्राम्नाने ऽपि नाम्नः स्वरूपेणानाम्नानादमन्त्रत्वं स्यादित्याशङ्कते *एवं तर्हीति* *सर्वनाम्नः स्वरूपाम्नानप्रकारत्वोपपादनायाशक्तानामभ्युपगमेनोत्तरमाह *तथा नामेति* सर्वनामद्वारा स्वरूपाम्नानान्न मन्त्र- ४।२०।१

१ आम्नानात्तयोरिति २ पु० पा०।

त्वानुपपत्तिरिति स्वमतेन परिहरति * अथ वेति * ननु देवदत्ता-दिनाम्नो मन्त्रत्वे इरापदादिवत्कस्मात्साक्षादनाम्नानमित्याशङ्क्य विशेषाणामित्युक्तं कथं सर्वनाम्ना स्वरूपाम्नानमित्याशङ्क्य *अशू-न्येत्युक्तम् * सर्वनाम्नो प्रयोगार्हत्वात्तत्स्थानस्य शून्यत्वापत्तेः प्रयो-गार्हदेवदत्तादिनाम तत्स्थानपूरकतयावसीतइत्याशयः । एतदेवो-पपादयति * इतरथा हीति * आशास्ते ऽयं यजमान इत्येताव-ताप्यभिधानसिद्धेस्तदंशेत्युक्तम् । नन्वेवमपि देवदत्तादिपदस्याध्येतृ-भिरनाम्नानादविधानात्कथं सर्वनामस्थाने प्रयोग इत्याशङ्क्याह * प्रवरेति * इरापदादिवत्साक्षाद्विध्यभावे ऽपि सूक्तवाकादिमन्त्रवि-धिनैव मन्त्रगतसर्वनामार्थवत्त्वाय तत्स्थाने देवदत्तादिपदप्रयोगः कल्प्यतइत्यर्थः । यजमानस्य तत्पूर्वेषामपरेषां च प्रत्येकं नाम गृ-ह्णातीति सर्वनामरहितसुब्रह्मण्यानिगदविधिर्विहितं नामधेयं दृष्टा-न्तः । सर्वनामस्थानप्रक्षेप्यनामधेयस्य मन्त्रत्वोपपादनप्रयोजनमाह * तस्मादिति * अधिकरणविषयभूतानाम् ऊह्यादीनां मन्त्रत्वाभिमत-सर्वनामस्थानप्रक्षेप्यनामेरापदादिवैषम्यमुपसंहरति * नन्वियति * चिन्तान्तरसिद्धान्तमुपसंहरति * अतश्चेति * क्रतुनाकाङ्क्षितं प्र-त्यभिज्ञायमानं च मन्त्रत्वं यस्येति विग्रहः । अविशिष्टं तथा मन्त्रत्वेन प्राप्तत्वात् क्रत्वाकाङ्क्षितप्रत्यभिज्ञायमानमन्त्रत्वाच्च प्रायश्चित्तेन छा-न्दसप्रयोगैश्च न वर्जनीयमित्युक्ते कथं मन्त्ररूपप्राप्तिस्तत्प्राप्तौ वा कथमूह्यपदस्यामन्त्रस्य प्रक्षेप इत्याशङ्काभिधानेत्युक्तं कर्मसमवेतार्थप्र-काशनाख्यस्याभिधानस्य प्रकृतिवद्विकृतावपि कर्मसमवेतो ऽर्थो ऽग्नये जुष्टं निर्वपामीत्यनेन सकलेनाभिधेय इत्येवं चोदकेन प्रापितत्वादू-ह्यपदप्रक्षेपः । प्रकृतिवद्यथासमाम्नायावगतेन मन्त्रस्वरूपेणाभिधेय इत्येवं रूपेण चार्थस्य यथा समाम्नायावगतमन्त्ररूपस्य चोदकेन प्रा-पितत्वान्मन्त्ररूपप्राप्तिरित्यर्थः ।

॥ ऋग्लक्षणाधिकरणम् ॥ १० ॥

## तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

ननु कर्मभेदानुनिष्पाद्यपूर्वभेदसिद्ध्यर्थं भावशब्देभ्यो ऽपूर्वा-धिगतिरिति भावार्थाधिकरणेनोक्ते तदपवादायाख्यातद्वैविध्यमुक्त्वा प्रसङ्गान्मन्त्रगतस्याख्यातस्याविधायकत्वलक्षणे तृतीयप्रकारे ऽभि-हिते तदनुप्रसङ्गान्मन्त्रलक्षणोक्त्या ऽध्यायोपक्रमप्रतिज्ञातपदार्थसमा-प्तेः कथमृगादिलक्षणसङ्गतिरित्याशङ्क्याह * प्रसक्तेति * प्रसक्ता-नुप्रसक्तं चेति भाष्यगतेन चकारेण तदनुप्रसक्तस्याप्यर्थस्य प्रतिज्ञा-

भावविरोध इत्याशयः । ननु तेषां मन्त्राणां मध्ये यत्र मन्त्रे पादव्यवस्था स मन्त्र ऋगिति लक्षणस्यादुष्टत्वादेवं जातीयकेष्वित्यादिभाष्येणाभियुक्तोपदेशाभिधानं व्यर्थमित्याशङ्क्याह * शब्दार्थस्येति * यदीति भाष्येणार्थवशत्वस्येह लक्षणान्तर्गतिं मत्वा यदग्ने स्यामहं त्वमित्यादावर्थवशत्वसद्भावे ऽप्यग्निः पूर्वेभिर्ऋषिभिः यद्वा जगज्जगत्याहितं पदमित्यादौ लघुगुर्वक्षरसाम्याख्यवृत्तवशेनाग्निमीळ इत्यादौ चाक्षरसंख्यानियमलक्षणाच्छन्दोवशेन तमुग्रामिन्द्रं न रेजमानमित्यादौ चान्यवैषम्येणैवादेवमिन्द्रोविव्ये नृन्प्रेत्यादौ च प्रायवशेन पादव्यवस्थायामर्थवशत्वाभावाल्लक्षणाव्याप्तिं शङ्कितामुपपादयति * क्रियापदेति * नन्वेवं सति न क्व चिदर्थवशेन पादव्यव- ४२१।१
स्था स्यादित्याशङ्कते * ननु चेति * ऋगर्थापर्यवसाने ऽप्यवान्तरार्थपर्यवसानात्परिहरति * कथमिति * आख्याताभावेनोत्तरयोरसावप्यसमाप्त इत्याशङ्कते * परयोरिति * तयोरप्याख्यातान्वयात्समाप्तिमाह*नेति* अनावृत्तस्यैवानेकान्वयमात्रविवक्षयानुषङ्गाभिधानान्न वाक्यभेदापत्तिः । एतदेवोपसंहरति * तस्मादिति * नार्थवशेनेति परिहारभाष्यं व्याचष्टे * एतस्य त्विति * पादव्यवस्थैव कथमित्यपेक्षायां लक्षणानन्तर्गतस्याप्यर्थवशत्वस्यार्थवशेन वृत्तवशेनाध्येतृप्रसिद्धिवशेनेत्युपलक्षणायाभिधानान्नानर्थक्यमित्याशयः ।

॥ सामलक्षणाधिकरणम् ॥ ११ ॥

## गीतिषु सामाख्या ॥ ३६ ॥

गीतित्वस्य लौकिक्यामपि गीतौ सद्भावेनातिव्यापकत्वमाशङ्क्य मन्त्रगतत्वविशेषणसूचनायाह * तेषामिति*अभियुक्तोपदेशो ऽत्रापि पूर्वोक्तप्रयोजन एवेत्याह*अत्रापीति * सिद्धप्रामाण्येनोपदेशेन व्यवहाराय प्रथमं दृष्टान्तेन तत्प्रामाण्योपपादनस्योचितत्वेन मन्त्रलक्षण एव कार्यत्वादभियुक्तोपदेशश्चेत्यादिभाष्यं पठनीयमिति स्वयमेवाशङ्क्य परमतेन तावत्परिहरति * प्राथम्यादिति * यथेति मध्यप्रतीकेनाभियुक्तेत्याद्युक्तं नाभियुक्तोपदेशमात्रप्रामाण्याभिधायैनातदुक्तं किं तु गीतेः सामत्वे साम्ना स्तुवतइति स्तुतिसाधनत्वायोगापत्तेरयमप्रमाणमित्याशङ्कानिरासादत्रैव वाच्यमित्याशयेन स्वयं परिहरति * अथ वेति * अभियुक्तोपदेशं दृष्टान्तं मत्वा साध्यविकलत्वमाशङ्कते * ननु चेति * नात्यन्तसाम्येन दृष्टान्त इत्याशयेन परिहरति * नैष दोष इति * ननूपदेशदृष्टस्य प्रामाण्ये ऽपि गीतिमात्रविषयत्वं कथमवसीयतइत्याशङ्कानिरासार्थं गीति-

विशिष्टे चेदिति भाष्यं व्याचष्टे * गीतेरिति * सप्तमद्वितीयपादे वक्ष्यमाणस्यैव गीतिमात्रवाच्यत्वस्येह लक्षणसमर्थनायानागतावेक्षणेन भाष्यकृतोक्तत्वादपौनरुक्त्यम् । अत्रैव वृद्धसम्मतिमाह * आह

४२२।१ चेति *

॥ यजुर्लक्षणाधिकरणम् ॥ १२ ॥

शेषे यजुः शब्दः ॥ ३७ ॥

यजुष इति भाष्यस्य सूत्रप्रत्याख्यानार्थत्वभ्रान्तिं निरस्यति * शेष इति *

॥ निगदानां यजुष्ट्वाधिकरणम् ॥ १३ ॥

निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ ३८ ॥

निगदा इति भाष्यं सूत्रानारूढमाशङ्क्य व्याचष्टे *शेष इति* धर्मस्य विशेषाश्रवणादन्यत्ववाचितया विशेषशब्दं व्याचष्टे * धर्मेति*तृतीये वेदो वा प्रायदर्शनादित्यत्रोच्चैस्त्वोपांशुत्वयोर्वेदधर्मत्वे वक्ष्यमाणे ऽपि तत्रस्यपूर्वपक्षे स्थित्योपांशुत्वस्य यजुर्जातधर्मत्वेनोच्चैस्त्वस्य तदन्यतोक्ता विधित्वे विशेषशास्त्रेण सामान्यशास्त्रबाधात्सिद्धान्ते ऽपि धर्मान्यत्वोपपत्तेः पूर्वपक्षोपपादनाशक्तिं मत्वोच्चैरित्यस्यानुवादता भाष्यकृतोक्तेति भ्रान्तिं निवर्त्तयितुं विधित्वे ऽप्यबाधपक्षसम्भवे बाधपक्षस्यानङ्गीकार्यत्वाद्धर्मान्यत्वस्य पूर्वपक्षोपपादकत्वं वक्तुमाह * यदि तावदिति * अनुवादत्वे तु निगदस्य यजुषो भेदेन विनोच्चैस्त्वधर्माप्राप्तेःसुसाधो भेद इत्याह * अथेति *

व्यपदेशाच्च ॥ ३९ ॥

धर्मान्यत्वस्य तार्तीयवाक्याधिकरणाविरुद्धत्वेनाभ्युच्चयमात्रत्वात्तन्मुख्यहेत्वभिधानार्थमिदं सूत्रं यथा भाष्यं स्पष्टत्वान्न व्याख्यातम् ।

यजूंषि वा तद्रूपत्वात् ॥ ४० ॥

तद्रूपत्वस्य हेतोः यजूरूपत्वादिति भाष्यकृद्व्याख्यानादन्यथापि निगदस्य मन्त्ररूपत्वाद्यजुषो वा निगदरूपत्वस्य श्रवणान्निगदस्यैव वोच्चैस्त्वधर्मरूपत्वाद्व्यपदेशभेदसिद्धिरिति व्याख्यानत्रयं सूचयन्सूत्रं व्याचष्टे * अह इति * कं मन्त्रमित्यपेक्षायामृचो यजूंषि सामानीत्यृग्यजुःसामस्वेव मन्त्रत्वोपसंहारात् मन्त्रत्वेना-

ध्येतृप्रसिद्धेरस्य निगदस्य त्रयान्यतमान्तर्भावावगतेर्ऋक्सामवैलक्षण्येन पारिशेष्याद्यजुष्ट्वमित्येको हेत्वर्थः । तदाहुः । ऋक्सुब्रह्मण्या इयजूः सामा इति प्रश्नोत्तरभूते मन्त्रएव खल्वयं निगदभूतो भवति तस्माद्यजुरिति वेदे निगदशब्दस्य मन्त्रशब्दसामानाधिकरण्येन हेतुना यजुष्ट्वापरित्यागेनैव निगदे मन्त्रशब्दप्रयोगावगमादिति द्वितीयः निगदस्य यजुष्ट्वापरित्यागेनैव धर्मविशेषेणोच्चैस्त्वेन व्यपदेशभेदसिद्धेरिति पूर्वपदावृत्त्या तृतीयः । गुणार्थो व्यपदेश इत्यत्र व्यपदेश हेतुर्निराकरिष्यमाणो ऽपि मुख्यत्वसूचनायेह निराकृतः । परिशेषेत्यनेन भाष्योक्तहेत्वर्थो व्याख्यातः । यद्वा त्रिष्वेव मन्त्रत्वोपसंहारान्मन्त्र एव खल्वयं निगदभूतो भवतीति च वेदे निगदस्य मन्त्रशब्दसामानाधिकरण्येन निगदे मन्त्रशब्दप्रयोगादित्येक एव हेतुः ।

## वचनाद्धर्मविशेषः ॥ ४१ ॥

उच्चैस्त्वोपांशुत्वयोर्जातिधर्मत्वाभावान्न तावद्यजुष्ट्वेन निगदस्यापांशुत्वप्राप्तिः यदि परं प्रायेण यजुर्वेदविहितत्वात्तत्प्राप्तिः स्यात्सास्य वचनेनैवोच्चैस्त्वावगमान्निरस्तेत्यभिधानायैतत्सूत्रं तत्र वचनशब्दो वचनं परमित्यादौ विधानवाचित्वेन प्रसिद्धः कस्माद्वाव्यक्ताभिधानवाचित्वेन व्याख्यात इत्याशङ्क्याह * न्यायेति * अग्नीदग्नीन् विहरेत्यादेर्निगदस्य प्रैषसामर्थ्यात्परप्रत्यायनेनार्थवत्त्वावगतेरुच्चैस्त्वं च विना परस्य प्रत्यापयितुमशक्यत्वान्न्यायप्राप्तेनोच्चैस्त्वेनोपांशुत्वबाध इत्यर्थः ।

## अर्थाच्च ॥ ४२ ॥

परप्रत्यायनार्थत्वादपि निगदस्य यजुष्ट्वे ऽपि धर्मविशेषो युक्त इत्येवमर्थतयैतत्सूत्रमाभासमानं पूर्वसूत्रेण पौनरुक्त्यापत्तेर्ननूपांशुत्वे परप्रत्यायनाशक्तौ प्रैषत्वायोगात्प्राप्तकालतायां लोट् भविष्यतीत्याशङ्कानिरासार्थत्वेनैतद्व्याख्यानार्थमस्ति चेति भाष्यं व्याचष्टे * अस्ति ४२३।१ चेति * अवयवार्थालोचनेनाप्युच्चैस्त्वमिति हेत्वन्तराभिधानार्थत्वेनैतत्सूत्रव्याख्यानार्थं यानीति भाष्यं व्याचष्टे * तथा चेति * न्यायेन वचनबाधो न युक्त इत्याशङ्कोपन्यासपूर्वं तन्निरासार्थं नन्वित्यादिभाष्यं व्याचष्टे * वाचनिकमपि चेति * परसम्वेदनार्थत्वान्निगदस्य तद्द्वारेणोच्चैस्त्वे स्वरूपतश्चोपांशुत्वे प्राप्ते ।

गुणे स्वरूपतो धर्मः प्रधानद्वारतो परः ।
यत्र स्यात्तत्र विज्ञेयं गुणधर्मस्य बाधनमिति ॥

अनेन न्यायेनोच्चैस्त्वस्योपांशुत्वाद् बलीयस्त्वात् प्रमाणबलाबलाच्च प्रमेयबलाबलबलीयस्त्वस्योक्तत्वाद्वाचनिकस्याप्युपांशुत्वस्य न्यायप्राप्तेनोच्चैस्त्वेन युक्तो बाधः यजुरन्तरविषयत्वाच्च वचनानर्थक्यपरिहार इत्याशयः ।

गुणार्थो व्यपदेशः ॥ ४३ ॥

यस्तु व्यपदेशो भेदहेतुत्वेनोक्तः स यजुष्ट्वे ऽपि निगदस्योच्चैस्त्वगुणाभिधानार्थत्वेनोपपन्नत्वान्न भेदसाधक इत्येवं सूत्रव्याख्यानार्थमर्थेति भाष्यं व्याचष्टे * ब्राह्मणेति *

सर्वेषामिति चेत् ॥ ४४ ॥

निगदशब्दस्योच्चैस्त्वगुणाभिधानार्थत्वे सत्यृक्ष्वपि निगदशब्दः स्यादित्येवमर्थत्वेन सूत्रव्याख्यानार्थं यदि त्विति भाष्यं व्याचष्टे * अतिप्रसङ्गेति *

नर्ग्व्यपदेशात् ॥ ४५ ॥

ऋचः सकाशात् निगदस्य भेदेनोपदेशान्नर्चो निगदत्वप्राप्तिरित्येवं सूत्रव्याख्यानार्थं नेत्यादिभाष्यं व्याचष्टे *न तावदिति* प्राप्तिमनभिधाय लिङ्गमात्राभिधानमसाधकत्वादयुक्तमित्याशङ्क्यातिप्रसङ्गस्तावन्निगदशब्दस्यानृग्वाचित्वहेतुप्रवृत्तिनिमित्तप्रापकाज्ञाने ऽपि व्यपदेशान्निरस्तः या तूच्चैस्त्वे सत्यप्यृचि निगदशब्दाप्रयोगात् व्यभिचाराशङ्का तन्निरासः प्राप्त्यभिधानभाष्ये भविष्यतीति तावच्छब्देन सूचितम्।उच्यतइत्यादिप्रश्नपूर्वं प्राप्त्यभिधानार्थं भाष्यं व्याचष्टे* न चेति * गदतेरपादबद्धपदसमुदायवाचित्वात्प्रकर्षवाचिनि शब्दोपसृष्टस्योच्चैरविनोच्चार्यमाणापादबद्धसमूहवाचितावसीयतइत्याशयः । प्रयोजनं पूर्वपक्षे निगदानामृग्यजुःसामान्यत्वाद्वाचस्तोमे शंसनाभावः । सिद्धान्ते यजुष्ट्वाच्छंसनमिति ।

॥ एकवाक्यत्वलक्षणाधिकरणम् ॥ १४ ॥

अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥४६॥

भाष्योक्तयजुःपरिमाणाभिधानार्थत्वत्यागेन वाक्यलक्षणार्थतयैतत्सूत्रं कैश्चिद्व्याख्यातं तद्दूषणायोपन्यस्यति* केचिदिति * वाक्यस्यापि लौकिकस्यैव लक्षणमित्याह * तत्रापीति * एतदेव प्र-
४२४।१ श्नपूर्वकमुपपादयति * कुत इति * श्लोकं व्याचष्टे * लौकिकानां हीति * ननु वाक्ये लक्षयितव्ये वैदिकं कस्मान्न लक्ष्यतइत्याशङ्क्या-

ह * वैदिकानां पुनरिति * यस्य वाक्यस्यैकत्वादर्थैकत्वं गम्यते तद्वाक्यमिति वैदिकानां लक्षणमित्यर्थैकत्वमितीतिकरणेन सूचितं कस्माद्वैदिकवाक्यानामेतल्लक्षणानुपपत्तिरित्याशङ्क्य * अनन्येत्युक्तम * वैदिकानामर्थस्यानन्यप्रमाणगम्यत्वेन प्राग्वाक्यादज्ञातत्वादज्ञाने ऽपि वाक्यात्प्राग्वाक्यैकत्वाज्ञानादर्थैकत्वासिद्धेर्नार्थैकत्वस्य वाक्यलक्षणतोपपन्नेत्यर्थः कथं वाक्यैकत्वस्यार्थैकत्वज्ञानहेतुतेत्याशङ्क्याह * यथैव हीति*वेदवाक्यानां सौत्रलक्षणानुपपत्तौ वृद्धसम्मतिमाह*आह चेति* शास्त्रासङ्गतत्वेन लौकिकवाक्यलक्षणं दूषयति * अत्रेति * नन्वर्थापत्त्या विपरीतवेदवाक्यलक्षणार्थं लौकिकवाक्यलक्षणाभिधानमित्याशङ्क्याह * वैदिकेति * वाक्यैकत्वस्य वाक्यार्थैकत्वज्ञानहेतुत्वं विनापि शब्दान्तरादिभिर्वाक्यार्थभावनाभेदसिद्धेर्न भेदलक्षणोपयोग्येतल्लक्षणमित्याशयः। यदि त्वज्ञातलक्षणस्य वेदवाक्यस्य धर्मप्रामाण्यज्ञानायोगात्प्रामाण्यसिद्ध्यै लक्षणाभिधानं ततः प्रमाणलक्षणे वाच्यमित्याशयेनाह * किमर्थमिति * एकशब्दानर्थक्यापत्तेश्च न लौकिकवाक्यलक्षणे ऽप्येतत्सूत्रं समञ्जसमित्याह * एकेति * ननु एकशब्दस्य लौकिकवाक्यलक्षणानुपयोगे ऽप्यर्थैकत्वज्ञानहेतुवाक्यैकत्वपदसमूहत्वं वेदवाक्यलक्षणं सूचयितुमेकशब्द इत्याशङ्क्य वेदवाक्यलक्षणमपि मन्त्रप्रकरणासङ्गतत्वादयुक्तमित्याशयेनाह * कथं चेति * भाष्यविरोधश्च तेषां स्यादित्याह * भाष्येति * न केवलं शास्त्रलक्षणप्रकरणासङ्गतिभाष्यविरोधा एव तद्व्याख्याने दोषाः किं त्वनुपयोगो ऽपीत्याह * किं चेति * एकशब्दार्थवत्त्वायैकवाक्यत्वस्येदं लक्षणमिति यदि कश्चित् ब्रूयात्तदप्यनुपयोगीति वक्तुम * एकत्वस्येत्युक्तम * मन्त्रादिषु मध्ये क उपयुज्यतइति वाक्यं तदेकत्वलक्षणवादिभिर्वक्तव्यमितीतिकरणाध्याहारेण योज्यम। यजुर्व्यतिरिक्तमन्त्रेषु तावदनुपयोगं विवृणोति * ऋगिति * ब्राह्मणे विवृणोति * तथेति * एकवाक्यत्वलक्षणस्य वाक्यभेदपरिहारोपयोगं शङ्कते * नन्विति * दोषत्वावधारणेन वाक्यभेदस्य परिहार्यत्वात् वाक्यैकवाक्यत्वज्ञानं च विनाप्यावृत्तिविभागयोर्दोषत्वावधारणान्नैकवाक्यत्वलक्षणस्य वाक्यभेदपरिहारोपयोग इति परिहरति * नेति * अनावृत्तस्याविभक्तस्य वा शब्दस्य विवक्षितानेकार्थाभिधानाशक्तेः पदादिरूपस्य शब्दस्यावृत्तिरादिशब्दोक्तो विभागो सामर्थ्यहेतुकत्वात् स्वत एव दोषत्वसूचनायासामर्थ्यमित्युपचरितः असामर्थ्यहेतुकं यच्छब्दावृत्त्यादि स वाक्यभेदः स चासामर्थ्यरूपत्वात् स्वत एव तावद्दोष-

४२८।१

त्वेनावधार्यते विभागावृत्त्योस्तु दोषतोपपादयिष्यतइत्याशयः । श्लोकं व्याचष्टे * पदेति * वाजपेयगुणविधावाख्यातपदावृत्तिः।ग्रहैकत्वविवक्षायां पदैकदेशप्रातिपदिकावृत्तिः हविरार्त्तेरुभयत्वेन विशेषणे हविरार्त्तिमार्छेदिति पदसमुदायावृत्तिः। आरुण्यस्य कृष्णप्रकरणनिवेशे ऽरुणयेति पदस्य पिङ्गाक्ष्यादिवाक्याद्विभागः। नानात्वग्रहणं दृष्टान्तार्थं कथं वाक्यैकत्वज्ञाननिरपेक्षैरावृत्तिलक्षणो विभागलक्षणो वा वाक्यभेदो दोषत्वेनावधार्यतइत्याशङ्क्याह * विभागेति * अरुणया क्रीणातीति तृतीयया क्रियान्वयस्य गम्यमानस्य त्यागः प्राकरणिकानां चानेकद्रव्याणामारुण्यनियमादनेकादृष्टकल्पना आवृत्तिलक्षणवाक्यभेदे त्वावृत्तेरभेदत्वेनाप्रामाण्यं दोष इत्यर्थः। एतदेवोपसंहरति * इतीति * लोके त्वत्यन्तानुपयोग इत्याह * पौरुषेयेति * लक्षणान्तरापेक्षामभ्युपेत्यैतल्लक्षणमनुपयोगीत्याह * यदि चेति * यत्तु हेतुप्रसिद्धेर्लौकिकवाक्यलक्षणमेतदित्युक्तं तद्वक्त्रर्थं श्रोत्रर्थं वेति विकल्प्य दूषयति * वक्तृणां चेति * व्यवहारानौपयिकं च स्वरूपज्ञानमात्रार्थं लक्षणं वेदवाक्ये ऽपि कस्मान्नोक्तमित्याह * किमर्थं चेति * यत्त्वर्थापत्त्या विपरीतं लक्षणं सूचितमित्युक्तं तदनुभाष्य दूषयति*यदि त्विति*न च वाक्यैकत्वादर्थैकत्वमितीदृग्वाक्यलक्षणमित्याह * न चेति * नन्वनेनार्थैकत्वज्ञानहेत्वेकवाक्यत्वं वेदवा-
४२६।१ क्यलक्षणं सूचितमित्याशङ्क्याह *अपि चेति * वेदवाक्यलक्षणविषयोत्थितार्थापत्तिर्नैकान्ततो विपरीतं लक्षणं कल्पयतीत्याशयः। ननु लौकिकानामेवैतल्लक्षणमिति परिसंख्ययास्य लक्षणस्य वैदिकविषयत्वनिवृत्तेर्विपरीतं वेदवाक्यलक्षणं कल्प्यतइत्याशङ्क्याह * न चेति * सत्यामपि सामान्यविशेषोपादानेन सम्भवत्या परिसंख्यया वेदवाक्यविषयत्वनिवृत्तावनेकैतत्व्यतिरिक्तलक्षणसम्भवान्न नियोगतो वाक्यैकत्वादर्थैकत्वमिति लक्षणं कल्पयितुं शक्यमित्याह * यदि हीति * ननु विपरीतमेव लक्षणं बुद्धिस्थं भवति न्यान्यमात्रमित्याशङ्क्याह*एवमपीति* वैपरीत्यस्याप्यनेकधा सम्भवान्न निर्धारणं भवतीत्याशयः।या चार्थैकत्वस्यासिद्धतोक्ता सा वाक्यैकत्वस्यापि तुल्येत्याह * किं चेति * श्लोकं व्याचष्टे * वाक्येति * एतदेवोपपादयति * तथा हीति * बहुवाक्यवर्त्तिष्वेकवाक्यवर्त्तिषु वा वर्णेषु बहूनि वाक्यान्येकं चेत्यवधारणा न दृष्टेत्यर्थः। अतः सूत्रोक्तेनैव लक्षणेन एकवाक्यत्वसिद्धिरित्याह * तस्मादिति * सर्वसाधारणं चैतल्लक्षणमित्याह * लोकेति * या त्वर्थैकत्वस्यासिद्धतोक्ता तामनुभाषणपूर्वकं परिहरति * यत्त्विति * श्लोकं व्या-

चष्टे * यदि हीति * भावनायाश्च वाक्यार्थत्वात्तस्याश्च भेदाभेदा- ४२७।१
वधारणस्य शब्दान्तरादिसदसद्भावाधीनत्वाद्वाक्यैक्यज्ञानात्प्रागर्थै-
क्यावधारणं सम्भवतीत्याह * भावनैव चेति * प्राधान्यं वि-
नानेकपदार्थवैशिष्ट्यायोगाद्वाक्यार्थत्वोपपादनाय प्राधान्यसूचनार्थ-
म्*स्वकारकेत्युक्तम्*शब्दान्तरादिभिर्विना भेदासिद्धिर्नित्यमित्यने-
नोक्ता श्लोकं व्याचष्टे * यस्मिन्निति * दध्ना जुहोतीत्यादौ भाव-
नास्वरूपाभेदे ऽपि गुणविशिष्टत्वरूपेणोत्पत्तिवाक्यविहितधात्वर्थ-
मात्रविशिष्टभावनारूपाद्भेदसद्भावान्नोत्पत्तिवाक्यस्य गुणवाक्यैः स-
हैकवाक्यतापत्तिः।परव्याख्यां दूषयित्वा यथाभाष्यं सूत्रं व्याख्यातु-
मुपक्रमते * तस्मादिति * सङ्गतिं तावदाह * भेदेति * ऋचो
यजूंषि सामानीति बहुवचनश्रवणादृगाद्यवान्तरभेदाकाङ्क्षायामेताव-
तीयमृगित्युपदेशकाध्येतृवाक्यादृचाम् एतावदिदं सामेत्यस्माच्च सा-
म्नां भेदसिद्धेर्लक्षणं न कृतम् करणे ऽपि यजुर्वेदस्याध्येतृवाक्यादसि-
द्धेर्भेदज्ञानार्थं लक्षणमित्यर्थः । ननूत्तरादिः पूर्वान्तलक्षणमिति व-
चनादिषे त्वेति शाखां छिनत्त्यूर्जे त्वेत्यनुमार्ष्टीत्यादिभिन्नप्रतीकाविनि-
योगेन यजुषामपि भेदसिद्धेस्तद्भेदलक्षणमपि न कार्यमित्याशङ्कते
* नन्विति * अभ्युपगम्यैतद्वचनप्रामाण्यमव्यापकत्वं तावदाह
* न तावदिति * सौत्रविनियोगस्य भेदप्रतीतिमूलतया तन्नैरपेक्ष्ये-
ण लक्षणत्वायोगात् * ब्राह्मण इत्युक्तम् * सत्यपि वा सर्वेषामभि-
मतभेदानां विनियोगे मध्ये विनियोगरहितमन्त्रान्तरसद्भावशङ्कानि-
वारणाशक्तेरर्थापत्त्ययोगाद्वचनस्य चावैदिकतया स्वातन्त्र्येण प्रामा-
ण्याभावात्सूत्रकृद्वचनस्य चैकार्थ्यनिबन्धना पदसमूहस्यैकवाक्यतेति
न्यायमूलत्वात्तस्य लक्षणस्वरूपमुच्यतइत्याह * न चेति * यजुः
परिमाणे सूत्रयोजनार्थं यावतेति भाष्यमिषे त्वेत्यादियजुषां यागे वि-
नियोगाभावादयुक्तमाशङ्क्यावतारणपूर्वं व्याचष्टे * तत्रेति * यजे-
रुसिं प्रत्यये कृते यजुःशब्दव्युत्पत्तेस्तस्य चोणादित्वेन बाहुलकत्वा-
त्प्रयोगानुसारेण करणवाचित्वावगतेरिषे त्वेत्यादीनामपि च प्रकर-
णाम्नानानुमितेन वाक्येन यागाङ्गत्वावगमाद्यजुष्ट्वाविरोध इत्याश-
यः । ननु श्रुत्यादिभिः छेदनादौ विनियुक्तानां कथं यागाङ्गतेत्याश-
ङ्कानिरासार्थं यावता क्रियाया इति भाष्यं व्याचष्टे * तत इति *
तावच्चेति योजनोपसंहारभाष्यं व्याचष्टे * तेनेति * वाक्यविशे-
षस्यैव यजुष्ट्वाद्यजुर्विषयः सूत्रे वाक्यशब्द इत्यर्थः । श्लोकं व्याचष्टे
* वचनार्हं हीति * यावान्पदसमूहो वाक्यं तावानेव यजुरिति वा- ४२८।१
क्यपरिमाणेन यजुः परिमाणं वक्तुं वाक्यलक्षणमित्यर्थः । ननु म-

न्त्रावान्तरभेदप्रस्तावाद्यजुर्भेदे प्रतिपाद्ये यजुः परिमाणलक्षणमप्यसु-ङ्गतमित्याशङ्कानिरासार्थत्वेनैतदस्माच्चेदिति भाष्यं व्याचष्टे * ईदृशं चेति * अनेन चैतस्माच्चोदकार्थत्वात्कारणादेकयजुर्वाक्यता भवति तस्माद्यावानेकार्थः पदसमूहस्तावदेवैकं यजुर्वाक्यमधिकं तु यजुर्वाक्यान्तरमिति सावधारणत्वेन भाष्यं योजितम्। किमित्युदाहरण-प्रश्नभाष्यं विपर्ययाशयेन व्याचष्टे * किमिति * चेच्छब्देनैकार्थ्यसाकाङ्क्षावयवत्वयोः संहतयोः लक्षणत्वेनाभिधानात्प्रत्येकं लक्षणत्वाभावेन लक्षणद्वित्वायोगाल्लक्षणाधिष्ठानाभिप्रायो लक्षणशब्दः एतदेवोपपादयति * तथा हीति * श्लोकं व्याचष्टे * पदस्य हीति* प्रकृतिप्रत्यययोरन्वयव्यतिरेकाभ्यां प्रत्येकमर्थप्रत्यायनशक्त्यवगमाद्विभक्तप्रयोगाभावेनार्थप्रत्ययाभावः शक्तिशब्देन लक्षितः देवस्येत्युदाहरणभाष्याशयमाह * प्रयोजनेति * नन्वित्यादिभेदानां संसर्गाणां च बहुत्वादित्यन्तमाशङ्काभाष्यं तात्पर्यतस्तावत्व्याचष्टे * न न्विति * एकैकपदस्यैकार्थ्यात्पदसमूहस्यानुदाहार्यत्वशङ्कायां साकाङ्क्षावयवत्वाभावात्सत्यमित्यनेन निरस्तायां न तर्हीत्यनेन पदार्थानेकत्वात्पदसङ्घस्य च पदार्थातिरिक्तैकार्थवाचितायास्तन्त्रताधिकरणे निरस्तत्वात्पदसङ्घस्यानुदाहार्यत्वशङ्काशये विवृते ननु पदार्थातिरिक्तैकनिर्भागवाक्यार्थायोगे ऽपि पदार्थानां भेदः संसर्गो वाक्यार्थ इत्याशङ्कानुपपत्त्यभिधानार्थं भेद इति भाष्यं व्याचष्टे * यदेति * तथापीत्याशङ्कासमर्थनार्थं भाष्यमुपपादयितुमवतारयति * अत इति * भेदानेकत्वं तावत्प्रश्नपूर्वकमुपपादयति * कथमिति * ऋगतावित्यस्य धातोरौणादिके थन्प्रत्यय कृते ऽर्थशब्दव्युत्पत्तेः । प्र-
४।१९।३ तिपदमर्थत्वाद् गम्यमानत्वादित्यर्थः।श्लोकं व्याचष्टे * व्यक्तीति * ननु यथा शुक्लशब्दसन्निधानात् कृष्णादिभ्यो गोव्यक्तेर्व्यवच्छेदः प्रतीयते तथा शुक्लत्वसंसर्गस्यापि प्रतीतेः कस्मान्न वाक्यार्थतेत्याशङ्क्य शुक्लत्वसंसर्गस्य गोपदार्थान्तर्गतत्वादित्युक्तं गोव्यक्तेः शुक्लशब्देन कृष्णादिभ्यः शुक्लव्यक्तेश्च गोशब्देनाश्वादिभ्यो निवृत्तौ वाच्यायां कृष्णादिव्यक्तिष्वपि गोत्वस्याश्वादिष्वपि शौक्ल्यस्य सत्त्वात्स्वरूपेणाव्यावृत्तेः शब्दवाच्यत्वरूपेण व्यावृत्तिं वक्तुं गोशब्दस्य शुक्लशब्दस्य चेति चोक्तं संसर्गानेकत्वमुपपादयति * तथेति * श्लोकं व्याचष्टे * आकृतीति * गोत्वशुक्लत्वयोरेकार्थसमवायलक्षणस्य संसर्गस्य सम्बन्धत्वेन द्विष्ठत्वात्तत्सम्बन्धिभेदे ऽप्यैक्यमाशङ्क्य * सामस्त्येनेत्युक्तम् * व्यक्तिसमवेतं गोत्वमितिवद् गोत्वसमवेता व्यक्तिरित्यप्रतीतेः सम्बन्धत्वे ऽपि समवायस्य व्याप्तिवदा-

धेये सामस्त्येनोपलम्भात् द्विष्ठत्वाभावेनैकव्यक्त्युपसंहारात्मकस्यै-
कार्थसमवायस्यापि न द्विष्ठतेत्याशयः। ननु यद्यपि गोत्वविशिष्टायां
व्यक्तौ शुक्लत्वसंसर्गाच्छुक्लत्वविशिष्टायां व्यक्तौ गोत्वस्य संसर्गो
ऽन्यस्तथापि गौः शुक्ल इति वाक्यादेकस्मिन्नर्थे गोत्वशुक्लत्वयोः
संसर्ग इत्येकरूप्येण प्रतीतेर्वाक्यार्थैक्यमित्याशङ्क्याह * यद्यपीति *
गौः शुक्लः स्थूल इति त्रिपद एव तावद्वाक्ये गौः शुक्लो गौः स्थूलः
शुक्लः स्थूल इति येन येन वाक्यैकदेशेनावस्थितं पदद्वयमन्योन्यं सं-
सृज्यते तेन तेन वाक्यैकदेशेन गोत्वशुक्लत्वादिसंसर्गस्य प्रतीतेर्वा-
क्यार्थत्रयापत्तिरित्यर्थः। द्विपदे ऽप्येकप्रयोजनवशीकाराभावेन
पदार्थानामुपकार्य्योपकारकत्वाभावात्स्वातन्त्र्येणैकार्थविशेषणत्वरू-
पैकत्वाभावात्प्रत्येकं भेदसंसर्गस्य प्रतीतेरपरिहार्यं वाक्यार्थनानात्व-
मित्याह * किं चेति * श्लोकं व्याचष्टे * यावद्धीति * ननु सि-
द्धान्तिनो व्यक्तिपदार्थकत्वाभावाद्भेदवाक्यार्थत्वशङ्कानुपपत्तेस्त-
दुपन्यासो न युक्त इत्याशङ्क्याह * यद्यपि चेति * एकेति भाष्यं ४३०।१
समाधानाशयविवरणार्थत्वेन व्याचष्टे * सिद्धान्तेति * सर्वपदे-
ष्वेकस्यैव पदार्थस्येतरविशिष्टस्यैव प्राधान्येन प्रतिपाद्यत्वादेकार्थते-
त्याशयः। एवं च सति विशेष्यस्यैवैकस्य पदार्थस्येतरैः सह संसर्ग-
स्य भेदस्य वा प्रतिपाद्यत्वाच्छक्यमेवैक्यं वक्तुमित्याह *एवमिति*
उक्तोदाहरणे विशिष्टैकप्रयोजनाभिधानार्थं यथा तावदिति भाष्यं
पदार्थान्तराणां निर्वापविशेषणत्वासिद्धेरयुक्तमाशङ्क्योपपादयति
*तस्मादिति * नन्वित्याशङ्काभाष्यं व्याचष्टे * परस्त्विति* यदीति
परिहारभाष्यं व्याचष्टे *सिद्धान्तेति* विशेषणद्वयानर्थक्याशङ्कार्थम-
थेति भाष्यं व्याचष्टे*किमर्थमिति*उच्यतइत्यादि पुरोडाशप्रतिष्ठाप-
नम् इत्यन्तं भाष्यं तात्पर्यतस्तावद्व्याचष्टे*प्रत्युदाहरणे इति* अवयव
शो व्याचिख्यासुर्भवतीति भाष्यं तावद्व्याचष्टे*पुरोडाशेति*नन्वित्यै-
कार्थ्याभावाशङ्काभाष्यं निर्वापन्यायेनेहाप्याशङ्कानिरासोपपत्तेरयुक्त
माशङ्क्योपपादयति * निर्वापे इति* नेति परिहारभाष्यमसकृदुच्चा-
रिताख्यातयोगेन भगादीनां संहत्य विशेषणत्वादनुपादानान्निरपेक्ष
साधनत्वावगतेस्तद्भेदेन विभागनानात्वावगमादयुक्तमाशङ्क्योपपा-
दयति * तत्रेति * स्तुत्यर्थमसमवेतनिरपेक्षसाधनभेदाभिधाने ऽपि
क्रियान्यत्वाभावस्य चित्यधिकरणे न च कारकभेदादस्य भेदो भव-
तीति वार्त्तिके वक्ष्यमाणत्वाद्भागादिकर्तृभेदमात्रेण तावन्न विभागा-
न्यत्वापत्तिः। न चायुरादिवदसमवेतत्वे ऽपि प्रोत्साहनायाशास्यत्वे
न भागादेः प्राधान्यं येन विशेषणभेदात् क्लृप्तिवद्विभागभेदः स्या-

दित्यर्थः । विशेषणाविवक्षाभिधानार्थः सामान्यशब्दः तथेति प्रत्यु-
४३१।१ दाहरणान्तराभिधानार्थं भाष्यं व्याचष्टे * तस्मिन्निति * तस्मात्स-
म्यगिति परिहारोपसंहारभाष्यं व्याचष्टे * तस्मादिति *

॥ वाक्यभेदाधिकरणम् ॥ १५ ॥

## समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

कियतः पदसमूहस्येह चिन्ताविषयतेति दर्शयन् पूर्वपक्षय-ति * तेषामिति * दृष्टार्थस्यैव लिङ्गविनियोज्यत्वात्तत्पर्युदासेन दृष्टार्थमन्त्रत्वपर्युदासे सिद्धे ऽपीषे त्वेति शाखां छिनत्त्यूर्जे त्वेत्यनुमार्ष्टीत्याद्यनेकवाचनिकविनियोगसद्भावे ऽपि मन्त्रैक्यं वक्तुम् * प्रागित्युक्तम् * इषे त्वेत्यादिमन्त्राणां छेदनादिकरणत्वेन विधानादभिधानं च विना मन्त्राणां करणत्वायोगाद्यावता क्रियाया उपकारः प्रकाश्यतइत्यादिभाष्याद्यावता पदसङ्घेन स्मार्यते यागसाधनमित्यादिवार्त्तिकाच्च प्रतिपाद्यार्थैकत्वस्यैवैकवाक्यलक्षणत्वप्रतीतौ स्तोत्रशस्त्रमन्त्राणां चैकादृष्टसाधनत्वे ऽप्यैकमन्त्र्याभावात्कल्पाख्यातलभ्यछेदनादिक्रियाभिधानाभिप्रायो भाष्यवार्त्तिकयोरदृष्टशब्दः । अत एव तदुभाभ्यामेवं कल्पयितुं न्याय्यमित्युभयशब्दोक्तेन पदचतुष्टयमात्रस्यैकवाक्यत्वेन प्राक् दृष्टार्थत्वविरुद्धं वायवस्थेत्यत्राख्यातस्य श्रुतत्वाद्वायुवच्छीघ्रगामिनो भवथेति चोक्ते ऽर्थादपाकरणप्रतीत्युपपत्तेरपाकरणवाच्याख्यातस्य कल्प्यत्वादितरथास्यापि यथाश्रुतस्य वत्सापाकरणाभिधानार्थत्वायोगाददृष्टार्थत्वापत्तेरविधित्वायोगात् विरुद्ध्येत आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम् अपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतां आत्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् इत्येतावतः पदसमूहस्यैकमन्त्र्यमभिमतम् एतदेवोपपादयति * तथा हीति * तेषामदृश्यमानसमवेतार्थत्वानां पदानामप्रतीतो वाक्यार्थः प्रयोजनभूतः कल्प्यस्तस्य चाल्पस्यैव प्रमाणवत्वादेक एवार्थ इत्यर्थः । अनेन चादृष्टस्य वाक्यार्थस्यानुमानं यस्यां कल्पनायां साल्पीयसीति भाष्यं व्याख्यातं श्लोकं व्याचष्टे * यदा हीति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * इतीति * नन्वैकमन्त्रे प्रतीकभेदग्रहणं बहुवचनं वा युक्तं स्यादित्याशङ्कते * कथं पुनरिति * आनः प्राण एतु परावतश्चान्तरिक्षात् दिवस्परि आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वेति हिरण्यमभिव्यनितीत्यन्तप्रतीकेन विनियोगस्य सङ्क्षेपे वक्ष्यमाणत्वान्मध्यान्त्यप्रतीकाभ्यामपि वि-

नियोगोपपत्तेरभ्यासापेक्षया च बहुवचनोपपत्तेरुभयमप्युपपादयति * तदुच्यतइति* श्लोकं व्याचष्टे * आदीति * एवमिति सिद्धान्तोपक्रमभाष्यं व्याचष्टे * उच्यत इति * सौत्रसमशब्दोक्तं परस्परानाकाङ्क्षत्वं कल्प्यैकार्थत्वेन विभज्यमानसाकाङ्क्षत्वावगमादयुक्तमाशङ्क्येषे त्वेति भाष्येणानेकार्थत्वमुक्तमुपपादयितुं सामान्यन्यायं तावदाह * रूपादिति * श्लोकं व्याचष्टे * तिष्ठतु तावदिति * प्राणाय प्रयोजनाय त्वामभिव्यनिमीत्युक्ते कथं हिरण्याभिधानस्य प्राणप्राप्त्यर्थतेत्यपेक्षायां परावतो दूरदेशादन्तरिक्षाद्दिवश्च सर्वतः प्राणो ऽस्मानागच्छतु। यच्च पृथिव्या उपर्यायुस्तदप्यागच्छतु तवामृतत्वेनायुः प्राणादानसामर्थ्यादित्युपक्रमोपसंहारपर्यालोचनया प्राणप्राप्तिसिद्ध्यर्थत्वेन प्राणप्राप्त्याशासनस्य रूपादेकवाक्यत्वावगतेस्तद्दर्शनान्त्यप्रतीकेनापि सकलविनियोगो युक्तो न त्वेकवाक्यत्वरूपावगमात्प्रागिति विनियोगवाक्यं वेत्यनेन सूचितम्। न च रूपभेदानुसारात्प्रयोजनभेदकल्पने ऽपि दोषः प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपीत्युक्तत्वादित्याह * प्रमाणवच्चेति * एवं च सतीह त्वाशब्दभेदेन भिन्नवाक्यरूपावसायान्नान्योन्याकाङ्क्षोपलभ्यते। न चैकप्रयोजनत्वात्कल्प्यते तस्याप्यनुपलम्भादिति सामान्यन्यायस्य प्रकृतोपयोगमाह * रूपेति * नन्विहाख्याताश्रवणेन तल्लभ्यस्य प्रयोजनस्य कल्प्यत्वात्कल्पनालाघवादैक्यमेव युक्तमित्याशङ्क्याह * ततश्चेति * रूपभेदात्प्रयोजनभेदावगतेर्न तदैक्यकल्पना युक्तेत्याशयः। या च प्रयोजनैक्यात्साकाङ्क्षावयवत्वकल्पनोक्ता साप्याकाङ्क्षावशेनैव प्रयोजनैक्यस्य कल्प्यत्वादयुक्तत्वादयुक्तेत्याह * न चेति * नैराकाङ्क्ष्ये च सति सर्वदा वाक्यभेदः सिद्ध इत्याह * तेन चेति * विनियोगभेदाच्चेहैकवाक्यत्वे ऽपि दुर्वारः प्रयोजनभेद इत्याह * त्वत्पक्षे ऽपि चेति * अभ्युपगम्यादृष्टार्थभेदः साधितः। वस्तुतस्तु छेदनादिसाधनत्वविनियोगादि इषेत्वा छिनद्म्यूर्जे त्वानुमार्ज्मीति भिन्नाख्यातकल्पनेन दृष्टार्थत्वात्तद्भेदेन स्पष्टो भेद इत्याह * न चेति * अनेन च नन्वित्याशङ्कानिरासार्थं यद्यपीति भाष्यं प्रत्यक्षाद्यनुपलब्धो ऽपि प्रयोजनभूतो वाक्यार्थः श्रुतार्थापत्त्या छिनद्मीत्यादिशब्दकल्पनया गम्यत इत्येवं व्याख्यातम्। ये तु श्रुतार्थापत्तेः शब्दकल्पकत्वं नेच्छन्ति तन्मते ऽप्यवाचकस्यापि मन्त्रस्य रथघोषवत्स्मारकत्वोपपत्तेर्दृष्टार्थतेत्याह * यद्वेति * ननु त्वेतिकर्मकारकवाचिनः पदस्य क्रियापदं विना नैराकाङ्क्ष्यायोगाच्छ्रुतार्थापत्तेश्च शब्दाकल्पकत्वे ऽनुषङ्गेण ४३२।२

वाक्यसमाप्तिर्लौकिकवाक्यशेषो वेत्युत्तराधिकरणाचिन्तानुपपत्तेर- विशिष्टस्तु वाक्यार्थ इति चाभिधानार्थत्वस्य मन्त्राधिकरणो- क्तस्य बाधापत्तेरवाचकस्य मन्त्रस्य स्मारकत्वं न युक्तमित्याशङ्क्याह *उभयमपि चेति* अयुक्तो ऽप्ययं पक्षः कश्चिदाश्रितत्वादुक्त इत्याश- यः । वस्तुतस्तु व्यवस्थितशास्त्रार्थाभ्युपगमस्य न्याय्यत्वादेकस्मि- न्पक्षे ग्राह्ये मन्त्राधिकरणोक्ताभिधानार्थत्वविरोधेनावाचकप्रयोगा- नुपपत्तेर्विकल्पस्य च वाक्यस्य साकाङ्क्षत्वाद्वाचकत्वायोगेन प्रयो- गेन प्रयोगासम्भवादध्याहार एव युक्त इत्याह * सर्वथेति * सूत्रकृद्भ्रान्तौ किं मूलमित्याशङ्क्याह * अथ वेति * यथाम्नानं यथाविनियोगं च यावान्मन्त्रो ऽवगतस्तदनुसार्यत्वाद्विनियोगग्राह्य- णस्यानुष्ठानकाले ऽनुसन्धानेन संस्कारोद्बोधे यतितव्यमिति शा- स्त्रार्थभ्रमः सूत्रकृद्भ्रान्तौ मूलमित्याशयः । ननु भ्रान्तिमूलत्वे ऽयं पक्षो न कैश्चिद्याज्ञिकैर्गृह्यतइत्याशङ्क्याह * तत्रेति * मन्त्रस्याध्याहृ- तपदवत्त्वे ऽप्यध्याहृतपदभ्रेषे मन्त्रभ्रेषनिमित्तप्रायश्चित्ताभावायाना- म्नानोपपत्तेस्तावन्मात्रमन्त्रत्वे ऽर्थापत्त्यभावाद्वस्तुतो शास्त्रीये ऽप्यर्थे सूत्रानुसाराच्छास्त्रीयत्वभ्रान्त्यानुष्ठानात् परिग्रह इत्याशयः।प्रकृतमुप- संहरति * इतीति * यजुर्विषयत्वाच्चेह वाक्यशब्दस्य यजुःश- ब्दस्य च यागसाधनवाचित्वेन यौगिकत्वात्सूक्तवाक्यवत् स्वाध्या- यकाले भेदानभ्युपगमे ऽपि कर्मकाले विनियोगभेदाद्यजुर्भेदावगते-
४३३।१ र्भेदेनैव प्रयोज्यतेत्याशयेनाह * किं चेति * नियोगशब्दो विनि- योगवाची प्रत्येकं यागहेतुत्वसिद्धये ऽन्योन्यनिरपेक्षाणां कार्यान्यतो- क्ता विनियोगभेदेनोपपादितो अनेन वेषे त्वेति छिनत्तीति विनियो- गाभिधानभाष्यं तात्पर्यतो व्याख्यातम्।आयुरिति भाष्यं व्याचष्टे *त- थेति * नन्विस्थाद्याशङ्काभाष्यं व्याचष्टे * निर्वापवदिति * उ- च्यतइत्यादिपरिहारभाष्यं प्रत्यवयवं व्याचष्टे * नेति * मन्त्रशब्देन क्लृप्तिशब्दस्य मन्त्रपरतोक्ता। ननु निर्विशेषक्लृप्तिमात्रस्येह विवक्षि- तत्वेन क्लृप्तिमन्त्रस्यार्थैक्यादैक्यावगतेः श्रुतमपि बहुवचनमभ्यासा- भिप्रायं व्याख्येयमित्याशङ्कानिरासार्थं ताश्चेति भाष्यावयवं तासा- मेवार्थमनपेक्ष्योच्चार्यत्वेनार्थैक्यनिमित्तैकवाक्यता नास्तीत्येवशब्दार्थे चशब्दमङ्गीकृत्य व्याचष्टे * इह तावदिति * मन्त्रपरत्वपक्षस्य परमतत्वसूचनार्थस्तावच्छब्दः। नन्वर्थाविवक्षायां वाक्यभेदहेत्वर्थभे- दाभावात् भिन्नवाक्यतापि न स्यादित्याशङ्कानिरासार्थं तत्रेति भाष्यावयवं व्याचष्टे * तत्र चेति * बहुवचनान्यथानुपपत्त्याक्ष- राणि प्रत्युपसर्जनभूतस्याप्यर्थस्य भेदो ऽवसीयतइत्याशयः। क्लृप्ति-

रूपस्य चार्थस्याविवक्षितत्वेन विशेषानपेक्षत्वादायुरादिविशेषा-
भिधानस्य मन्त्रबहुत्वापादनमेव प्रयोजनमित्यभिधानार्थं क्लृप्तीति
भाष्यावयवं व्याचष्टे * क्लृप्तीति * ननु बहुवचनस्य श्रुताभ्या-
सापेक्षयोपपत्तेरर्थभेदकल्पनानुपपत्तेर्मन्त्रे च क्लृप्तिसंज्ञायाः क्लृ-
प्त्यभिधानमात्रेणोपपत्तेरेकवाक्यतैव युक्तेति शङ्कार्थे नन्विति भा-
ष्ये ऽपूर्वदृष्टान्तत्यागेन दृष्टान्तान्तराभिधाने ऽभिप्रायमाह * यथेति*
सकृच्छ्रुतत्वान्निर्वापस्य भेदे ऽप्यभ्यासेन क्लृप्तीनां भेदो भविष्यती-
ति प्रत्यवस्थानानुत्थानार्थं दृष्टान्तान्तराभिधानमित्याशयः। एतदेव
विवृणोति * पुनरिति * क्लृप्तिसंज्ञायाः कल्पतामिति शब्दवत्त्वे-
नाप्युपपत्तेः क्लृप्तिमात्रस्याप्यविवक्षितत्वान्नैकार्थेनैकवाक्यतापत्ति-
र्विभागसमान्यस्य तु कर्माङ्गत्वेन तत्प्रकाशनं दृष्टार्थत्वाद्युक्तमिति वै-
षम्याभिधानार्थं नैतदिति भाष्यं व्याचष्टे * नैतदिति * शङ्काशेषत्वे
न यथेति भाष्यावयवं व्याख्यायेदानीं परिहारशेषत्वेन व्याचष्टे *
अथ वेति * विभागमन्त्रैक्याभिप्रायेणैतद् दृष्टान्ताभिधानमिति भ्रा-
न्त्याशङ्कते * ननु चेति * भ्रान्तिनिरासेनोत्तरमाहैवं * तर्हीति *
भेदे सत्यष्टदोषदुष्टविकल्पापत्तेरैक्यमेव युक्तमित्यनेन प्रकारेण भे-
दस्यैवाक्षेपान्नासङ्गतिदोषः कथमस्माद्भाष्याद्विकल्पप्रतीतिरित्याश-
ङ्क्य दृष्टान्तेन सहात्यन्तसाम्यापादनपरत्वादित्युक्तं शङ्काभाष्यं वि-
कल्पापादने योजयित्वा तन्निरासे परिहारभाष्यं योजयति * नै-
तदिति * यदि गुणभूते इत्यादिपूर्वाधिकरणभाष्येण साधनप्राधा-
न्ये भेदाभिधानादिहार्थाविवक्षायामपि प्रतीतिमात्रेणायुरादिप्राधा-
न्याभिधानं क्रियाप्राधान्ये ऽपि विशेषणभेदाद्भेदः शक्यो वक्तुमि-
ति प्रौढिदर्शनाय*अथापीत्युक्तम् * नन्विहार्थस्याविवक्षितत्वात्कथं ४३४।४
तद्भेदपरतेत्याशङ्कानिरासार्थत्वेन दृष्टार्थत्वादिति भाष्यावयवं व्याच-
ष्टे * भेदपरत्वे चेति * पूर्वं मन्त्रबहुत्वापादनार्थत्वरूपं यद् दृष्टा-
र्थत्वमुक्तं तदेव भेदपरत्वे साध्ये हेतुत्वेनोच्यतइत्यर्थः। अपि चे-
त्यादिभाष्यमिहेत्यादिभाष्येण पुनरुक्ततया भासनं पूर्वोक्तमन्त्रपर-
त्वपक्षादर्थपरत्वरूपपक्षान्तराभिधानार्थत्वेन व्याचष्टे * अथ वेति*
आयुर्दा अग्ने ऽस्यायुर्मे देहीत्यादिवदिहाप्यायुरादिशब्दानां प्रधान-
फललक्षणार्थत्वेन प्रोत्साहनार्थत्वोपपत्तेस्तद्भेदेव च लक्ष्यमाणार्थैक्ये
ऽप्यभिधेयार्थभेदाद्भिन्नवाक्यत्वोपपत्तेः मन्त्राधिकरणनिरस्तोच्चार-
णमात्रप्रयोजनत्वपक्षानुपपत्तिसूचनार्थो ऽथ वा शब्दः। ननूच्चारणार्थ-
त्वाद्धचेरर्थकमेता न युक्तेत्याशङ्कते * कथं पुनरिति * शब्दः पद्यते
गम्यते ऽभिव्यज्यते ऽनेनेति व्युत्पत्त्योच्चारणं शब्दपदशब्देनोक्तम्। उ-

च्चारणवाचितया लोके वचिः प्रयुज्यतइत्यर्थः। अभिधानवाचितया ऽपि लोके वचिः प्रयुज्यत इति परिहरति * नैष इति * शब्दमुच्चारयन्तं प्रयुञ्जाने वाचयतेः प्रयोगात्तदन्तर्गतस्य वचेर्यथोच्चारणार्थता ऽवगम्यते तथार्थमभिदधानं प्रयुञ्जाने ऽपि प्रयोगादभिधानार्थतापि गम्यतइत्याशयः। तेनैष शास्त्रार्थो भवतीत्याह *तस्मादिति* क्रियाभिधानप्रतिपादनस्य प्रकृतोपयोगाभिधानार्थमायुरित्यादिभाष्यं व्याचष्टे * तत्प्रकाशनेन चेति * इष्टार्थशब्देन प्रोत्साहनार्थत्वाविशेषान्मन्त्रभेदे ऽपि सर्वप्रयोगः सूचितः। प्रयोजनं तु मन्त्रैक्ये सत्येकदेशभ्रेषे ऽपि सर्वावृत्तिः भेदे तु यस्मिन्मन्त्रे भ्रेषस्तस्यैवावृत्तिरित्याशयः। तस्मादित्युपसंहारभाष्यं व्याचष्टे * इतीति *

॥ अनुषङ्गाधिकरणम् ॥ १६ ॥

अनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥

भिन्नाहः प्रयोज्यत्वेनानुष्ठानकाले ऽत्यन्तावुद्धिस्थस्याविशेषस्य समाम्नानकाले बुद्धिस्थत्वादनुषङ्गो भवतीत्यतिशयद्योतनायैतदुदाहरणमिति सूचयितुं मन्त्रप्रयोगस्य विषयं विविनक्ति * ज्योतिष्टोम इति* पूर्वाह्णापराह्णयोरभ्यस्यमानमाग्नेयसौम्यवैष्णवयागत्रयमेकोपसत् तथाविधानां तिसृणामुपसदां ज्योतिष्टोमे विहितानामवयवभूता प्रत्येकमादावाग्नेय्युपसदग्निमनीकमिति वाक्येन विहिता ततश्चाग्नेय्यस्तिस्रो भवन्तीत्यपिशब्देन सूचितम्। एवं च सति मन्त्रत्रयस्य यथासंख्यलक्षणेन क्रमेण भिन्नाहप्रयोज्याग्नेय्यङ्गत्वात् भिन्नाहप्रयोज्यतेत्याशयः। अहस्त्रयावच्छेदेनोपसदां त्रित्वात्प्रथमोपसदवयवभूताग्नेयी प्रथमा उत्तरोपसदवयवभूते उत्तरे अत्रेति सन्देहभाष्यं सामान्यतः शेषसद्भावासिद्धौ लौकिको वैदिको वेति विशेषचिन्तानुपपत्तेरयुक्तमाशङ्क्योपपादयितुमाह * तत्रेति * नन्वध्ययनविधिनाध्ययनेनैव वेदोपादाननियमादनधीतस्य शेषस्याभावावगमेनाधीत-
४३५।१२ मात्रस्य पूर्णतावसायात्कथं कल्पनेति पृष्टोत्तरमाह * कुत इति * साकाङ्क्षवाक्यानर्थक्यापत्तेरवश्यकल्पनीयत्वाच्छेषस्याधीतमात्रविषयो ऽध्ययनोपादाननियमो ऽवसीयतइत्याशयः। श्लोकं व्याचष्टे * न हीति * सन्देहभाष्योपपादनोपसंहारपूर्वं किं प्राप्तमिति पूर्वपक्षप्रतिज्ञाभाष्यं व्याचष्टे * तत्रेति * न हीत्युपपत्तिभाष्यं तात्पर्यतो व्याचष्टे * तथा हीति * श्लोकं व्याचष्टे * यथैवेति *

नन्वग्निसम्बन्धिन्यास्तन्वाः पत्न्या वा रज्ञाश्रयत्वादिति विशेषणमिति विशेषनिर्द्धारणाद्वैदिकवाक्यशेषस्यानभ्युपगमे कीदृशो वाक्यशेषः प्रयोज्य इत्यनध्यवसायः स्यादित्याशङ्क्याह * तत्रेति * व्यस्थितत्वेन बुद्धिविलम्बाभावाद्वैदिकस्याव्यवस्थिताल्लौकिकाल्लघुतरप्रयोगत्वेन प्रयोज्यत्वावधारणे ऽपि वैदिकत्वबुद्धिनिरासः पूर्वपक्षिणो ऽभिमत इत्यर्थः। कथं वैदिके तद्बुद्धिनिरास इत्याशङ्क्याह *तथा हीति*न हीति भाष्यस्य तात्पर्यान्तरमाह * यदीति * स च ४३६।२
प्रथमान्तानां विशेषणविशेष्याणां चतुर्थ्यन्तान्वयार्हत्वात्प्रथमान्तान्वयानर्हेण स्वाहाशब्देन व्यवायादनन्वयापत्तेरयुक्त इत्याशयः। एतदेवोपसंहरति * तस्मादिति * सिद्धान्तमारभमाणः सामान्यन्यायं तावदाह * इतीति * श्लोकं व्याचष्टे* वैदिकस्येति * मन्त्रस्याविधित्वे ऽपि वेदाभिप्रायश्चोदनाशब्दः। नन्वेवमपि याते अग्ने यज्ञियेत्यादिशेषस्य तनूस्तयेहीत्यादेरपि वैदिकस्य सम्भवात्कथं तनूर्वर्षिष्ठेति शेषनियम इत्याशङ्क्याह * या चेति * सन्निकर्षक्रमं दर्शयति * तत्रेति * एतदेव व्याचष्टे * एकस्मिन्निति * लिङादिप्रत्ययोक्तस्य विधेर्विषयाकाङ्क्षायां तत्रैव भावनाख्यविषयदर्शनाद्रमणीयमित्यदृष्टशब्दव्यतिरेकमाख्याय प्रकृतौ प्रत्यये वेत्यनेन प्रकृतावदृष्टो भावनादिरर्थः प्रत्यये ऽन्विष्यते प्रत्यये चादृष्टः करणांशः प्रकृतावन्विष्यतइत्यावृत्त्या व्याख्यातं प्रकृतिप्रत्ययात्मके स्वस्मिन्पदे क्रीणातीत्यस्मिन्नदृष्टं कर्मकरणं वा पदान्तरे ऽन्वेष्यं स्ववाक्ये सा वैश्वदेवीत्यत्रादृष्टस्तप्ते पयसीत्यनन्तरवाक्यान्तरे अनन्तरे त्वदृष्टस्तेनैवैकान्तरादिक्रमेण प्रकृते वाक्यान्तरे सौर्यादौ स्वप्रकरणे ऽनुपलब्धः करणोपकारश्चोदनादिसामान्यद्वारोपस्थाप्यमानाग्नेयादिगतोपकारानुसारेण प्रकरणान्तरे ऽन्विष्यतइत्यर्थः।सर्वात्मना ऽन्वेषणं व्याख्याय त्यक्तव्यापारे वेदे लौकिकाभ्यनुज्ञां व्याचष्टे * यदा त्विति * संयज्ञपतिराशिषेत्यादौ गच्छतामित्यादिपदाध्याहारो ऽत्रोदाहरणम्। ननु साकाङ्क्षस्याकाङ्क्षणीयालाभे व्यवहारानुपपत्तौ दर्विहोमानां वैदिकानां लौकिककरणोपकारालाभात्कार्यासाधनत्वं स्यादित्याशङ्क्याह * लोके ऽपि चेति *सर्वात्मनान्विष्यमाणाकाङ्क्षणीयालाभे यावल्लब्धेन नैराकाङ्क्ष्यं कल्प्यतइत्यर्थः। ननु लौकिकस्यापि शेषस्य वेदेनाभ्यनुज्ञाने लौकिकवैदिकयोः को विशेष इत्याशङ्क्याह * सर्वत्र चेति * सामान्यन्यायमुक्त्वा प्रकृते स्वपदस्ववाक्ययोः शेषाला- ४३७।१
भे ऽप्यनन्तरैकान्तरवाक्ये लाभात्स एव ग्राह्य इति सिद्धान्तमाह * तदिहेति * कस्मिन्वाक्यान्तरइत्यपेक्षायामाह * स चेति *

थादृग्विशेष्यसमर्पकः शेषो ऽपेक्षितस्तादृग्प्रजाशयेत्यस्यानन्तरो हराशयेत्यस्य व्यवहितो ऽधस्तादुपलभ्यतइत्यर्थः । उभयाकाङ्क्षाभावे ऽपि शेष्याकाङ्क्ष्यान्वयो युक्त इति प्रतीतिसौकार्यार्थं शेषिणोश्चैतन्यारोपेणाह * यद्यपि चेति * आवयोरप्यर्थेनायमाम्नातो न त्वेकस्यैवार्थेनेति भ्रमितव्यमित्येवं विधं प्रयोजकव्यापारं वाक्यशेषप्रतिपत्तारं पुरुषं प्रति कुरुतइत्यर्थः । सर्वेत्यनेनैकसामीप्यस्यासाधारण्यापादकत्वं निरस्तं सर्वानन्तराम्नानरूपसर्वार्थत्वप्रमाणात्प्रमाणान्तरेणाकाङ्क्षायोग्यतासन्निधित्वाविशेषरूपेण सर्वार्थत्वलाभोपपत्तेरसकृत्पाठवैयर्थ्यात्सकृत्पाठकारणं प्रमाणान्तरेत्यनेनोक्तम् । नन्वाम्नातस्य सर्वार्थत्वे सत्युत्तरयोः प्रागाम्नानात्प्रागेव प्रयोगः स्यादित्याशङ्क्याह * यद्यपि चेति * प्रथमान्तविशेषणविशेष्यान्वयानर्हेण स्वाहाशब्देन व्यवायपरिहारार्थं पश्चात्प्रदेशवर्त्तित्वेनाकाङ्क्षितत्वात्तत्रैव निवेश इत्यर्थः । ननु पश्चान्निवेशे पुनात्वच्छिद्रेणेत्यादिवत्सर्वेभ्यः पश्चात्पाठापत्तेः तदभावे नेहपश्चात्तन्निवेशो न युक्त इत्याशयेन पृष्ठोत्तरमाह * कुत इति * श्लोकं व्याचष्टे * स हीति * तृतीयानन्तरपाठे ऽपि पूर्वयोर्व्यवधानापत्तेः सर्वेषामीप्सिते प्रदेशे शेषाम्नानं न शक्यमित्याशयः । यद्वा पाठक्रमात्प्राङ् निवेशः प्रतीतः कस्मान्नाद्रियतइत्याशयेन पृष्टे प्रतीतिमात्रार्थत्वेनापि पाठोपपत्तेर्नान्वयाविरोधिनः प्राङ्निवेशस्यादरो युक्त इत्युक्त्वा पूर्वमन्त्रवदुत्तरयोरपि पश्चाच्छेषनिवेशज्ञापनार्थत्वात् प्रदेशपाठो ऽपि नात्यन्तमनर्थक इत्युत्तरार्द्धेनोक्तेः । नन्वेवं सति सर्वेभ्यः पश्चात्कस्मान्नाम्नात इत्याशङ्कानिरासार्थं स हीत्युक्तमिति व्याख्येयम् । नन्वाकाङ्क्षासान्निधियोग्यत्वाविशेषवदानन्तर्याविशेषो ऽपि सर्वार्थत्वहेतुर्भाष्यकृतोक्तः स कस्मादुपेक्षित इत्याशङ्क्योपेक्षाकारणं दर्शयिष्यन् भाष्यं तावदनुसन्धत्ते *भाष्येति* यथैव हीति भाष्येण प्रथमद्वितीययोर्मध्ये पाठादानन्तर्येणोभयान्वयमुक्त्वा हराशयेत्यनेन तृतीयस्य व्यवधानमाशङ्क्य तन्नेत्यनेन शेषाकाङ्क्षत्वाविशेषेणोभयोरेकशेषग्रहणलक्षणैकधर्मयोगात्समुदायापादनेनाव्यवधाने साधिते समुदायान्वयापत्तिमाशङ्क्य समुदायेन चेत्यनेन समुदायस्यैकार्थ्याभावेनाप्रयोज्यत्वाच्छेषान्वयायोग्यत्वेन वाक्यशेषस्य तेनान्वयाभावात्समुदाय्यन्वये ऽभिहिते नन्वेवं सत्यानन्तर्यादेकेनैव समुदायिनान्वयः स्यादित्याशङ्क्य समुदायीत्यनेन समुदायद्वारा समुदाय्यन्वयाद् विशेषाग्रहणेनोभयान्वयमुक्त्वा नन्वेवमपि विभागेनानेकसमुदाय्यन्वयोपपत्तेर्नावृत्त्यापादकः कृत्स्नस्य शेषस्यानेकान्वयो युक्त इत्याशङ्क्य समुदायिनोः प्राधान्यात्तदनुरो-

